योगात् । ततश्च नित्यस्यानुपकर्तव्यस्वभावतया नित्यान्यप्युपकारकाणि न युज्यन्ते, किं पुनरनित्यानि क्रमेणोपकारकरणस्वभावानि नित्यस्वभावाभिभावुकानि[1] । तथाहि । सहकारिभिरुपकारस्तस्य नित्यस्य विधीयमान किं व्यतिरिक्तो विधीयतेऽव्यतिरिक्तो वा । न तावद्व्यतिरिक्त , व्यतिरिक्ते ह्युपकारे भावस्यानुपकृतत्वान्न तदुपकारकरणार्थ क्रिया । तत स्यात्तत्सबन्धित्वेन । "उपकारस्य करणादुपकारेण सबन्धादर्थक्रिया ततो भविष्यति" इत्यपि वक्तु न शक्यते, यतो व्यतिरिक्तस्य सबन्ध कार्यकारणभाव एव । स च नित्यस्योपकारेण नास्ति, उपकारस्य स्वकारणेनैव जनितत्वात् । न च जनितस्यापि जनन, अतिप्रसङ्गात् । तस्मादव्यतिरिक्त एवोपकारोऽभ्युपगन्तव्य । अव्यतिरिक्ते चोपकारेऽनित्यै सहकारिभि सजनिते नित्यस्याप्यनित्यस्वभावापत्तेर्नित्यस्वभावाभावो भवेत् । नापि युगपत्, तथात्वे हि क्रियाविरतावभावत्वप्रसङ्गात् । तन्न नित्य वस्त्वर्थक्रियासमर्थमिति ॥

नाप्यनित्य, यतोऽनित्यमप्यर्थक्रिया कुर्वत्क्रमेण कुर्यात्, यौगपद्येन वा । न तावत्क्रमेण, यत क्रमो ह्येकक्रियाकरणानन्तर द्वितीयकरण, तच्चोत्पत्तिसमयसमनन्तरध्वस्ते न युज्यते, एकस्यैव कर्तुरेककरणानन्तर द्वितीय करोतीति व्यवहारदर्शनात्, न हि भिन्नस्य । तथाहि । भेदे व्यवहारोऽन्यथा दृश्यते, इदमनेनाद्य निष्पादित, इद द्वितीयमनेनेति, क्षणिकत्वेनैकत्व वस्तुन समुत्पत्तिसमनन्तरमेव ध्वस स्यात्[2] । विनष्टस्य चार्थक्रियापि न सभवति, किं पुनरेककरणानन्तरं द्वितीयकरण येन क्रमेण तत्रार्थक्रिया स्यात् । अथैकस्यैककरणानन्तर द्वितीयकरणमिति भ्रान्तोऽय व्यवहारः सदृशापरापरोत्पत्तिद-

1 B omits नित्यस्वभावाभि 2 A ध्वसात्

र्शनविप्रलब्धबुद्धीनां, परमार्थतस्तु न क्रमेणैकं किंचित्, अनेककार्यकर्तृभिन्नानामेव भिन्नकार्यकर्तृत्वात् । तदप्रयुक्तं, यतोऽज्ञाननिबन्धनोऽयं व्यवहारः, न च क्षणिकस्य ज्ञानस्यैवरूपव्यवहारनिरूपणनिपुणता[1] । तथाहि । ग्राह्यस्य ग्राहकस्य च निरन्वयविनाशे सति यत्प्रथमक्षणभावि रूपं न तद्द्वितीयादिक्षणेष्वस्तीत्यभ्युपगम्यते । ततश्च प्रथमक्षणभाविरूपग्राहकस्य ज्ञानस्य द्वितीयादिक्षणभाविभावरूपसमयेऽभावात्प्रथमक्षणे च द्वितीयादिक्षणभाविनामभावात्कृत्स्न सदृशापरापरोत्पत्तिदर्शनेन विप्रलब्ध । तस्माज्जनतामेवाननुभूतार्थवादिना युक्तिरिक्तवचसा भ्रम इति । नापि यौगपद्येन, यतो यौगपद्यं युगपत्कर्तृत्वं, तच्चैककालमनेककर्तृत्वं, न चैकस्वभावस्य तद्युज्यते । तथाहि । भावः कार्यं कुर्वन्येनैव स्वभावेनैकं करोति द्वितीयमपि तेनैव, स्वभावान्तरेण वा । यदि तेनैव, कथं कार्यभेदः, कारणस्वभावनिबन्धनत्वात्कार्यभेदस्य । न च वाच्यं " सहकारिसामग्रीभेदात्कार्यभेदः " इति, यतस्तत्राप्ययं पर्यनुयोगस्तदवस्थ एव । तथाहि । किं येनैव स्वभावेनैकसहकारिसामग्र्या सत्या पिपर्ति किं द्वितीयसहकारिसामग्र्यामपि तेनैव, स्वभावान्तरेण वा । न तावत्तेनैव, कार्याभेदप्रसङ्गस्य तादवस्थ्यापत्तेः । न च तत्रापि सामग्र्यन्तरापेक्षा, अनवस्थापत्तेः । अथ स्वभावान्तरेण, तदानेकस्वभावत्वं भावस्य स्यात्तथा सामग्रीनैफल्यं च । स्वस्वभावैर्नैव भिन्नकार्यकरणे समर्थत्वात्केवलमेवमभ्युपगमे क्रियानेकान्तवादापत्तिः, तथा चाभ्युपेतबाधेति । तदेवं नित्यस्यानित्यस्य चार्थक्रियासमर्थत्वाभावादवस्तुत्वम् । अत्र प्रयोगः । यदर्थक्रियासमर्थं न भवति, तदवस्तु, यथा शशविषाणम् । न भवति

---

1 A °वरूप व्यव°

चार्थक्रियासमर्थमेकान्तेन नित्यमनित्यं वास्तित्युपगम्य स एकान्तनित्यानित्यभङ्गः ॥ ५ ॥

[ VI ]

## [ अथ वादिघटमुद्गरवादः ॥ ]

इह पूर्वं पूर्वपक्षः सुबुद्धिः भवद्भिर्भवद्भिरभिमतसाध्यसाधनायेदमनुमानमुपन्यस्तम् । एतच्च सारेतरविचारचतुरचेतोभिर्विचार्यमाणं न चारुतया चतुरचेतसां चेतसि चकास्ति, साध्यसिद्धिनिबन्धनत्वात्साध्यसिद्धिनिबन्धनं नास्य प्रत्यनुमानबाधितत्वात् । तथाहि । यत्र यत्र[1] यदर्थमुपन्यस्यमानेन तदर्थप्रतिपत्तिर्न जायते न तस्मिंस्तदुपन्यासादिः, यथेह पटं प्रति घटः । न जायते च भवद्भिरुपन्यस्यमानेनानेन साधनेन साध्यधर्मिणि साध्यप्रतिपत्तिरिति व्यापकविरुद्धोपलब्धिः । न च "व्यापकविरुद्धोपलब्धिरसिद्धतामात्मनि प्रकाशयति" इति वक्तुं युक्तं युक्तियुक्तचेतसां पुंसाम् । तदाहीयं व्यापकविरुद्धोपलब्धिरसिद्धतामात्मनि प्रकटीकुर्यात्, यदि, केनापि प्रकारेण भवतोपन्यस्तस्य साधनस्य साध्यं साधयितुं सामर्थ्यं स्यात् । न च "निर्युक्तिकमभिधीयमानं कश्चिद्विपश्चिन्निश्चिनुयात्" इति कृत्या । यथैवास्य भवतोपन्यस्तस्य साधनस्य साधयितुं साध्यं सामर्थ्यं न विद्यते, तथैव तर्कवितर्कसम्पर्ककर्कशमतिभिरस्माभिर्न चेष्यते । परं तर्कवितर्कसम्पर्ककर्कशमतीनामस्मादृशानां पुरतो वाचस्पतेरपि न प्रवर्तन्ते वाचः किं पुनर्भवादृशानाम् । अथ गर्वोद्धुरः सद्बन्धुरबुद्धिरपि किमपि वावदीषि । तदानीं वद । पश्यन्तां[2] त्वदीया अपि मण्डूकाः, यदि पुनर्यथेतावतीं भुवमागत्य सपूर्वपक्षोत्तरवादं न वदाम, तदानीं सैव निखिलत्रैलोक्यवन्दनीयपादारविन्दा काश्मीरमण्डलमण्डनं भगवती श्रीशारदा लज्जते । तत्रापि[3] साध्यसिद्धिनिबन्धनं हेतु,

---

1 A omits 2 BC यत्र यत्र 3 BC omit

यतोऽभाणि प्रामाणिकैर्विदुषा वाच्यो हेतुरेव हि केवल । अतोऽस्माभिस्तस्यैव सबन्धिस्वरूप विशेषतो निरूप्यते । तथाहि । साध्य हि धर्मिणि साधनेन साध्यमान किं सामान्यरूपेण साध्यते, विशेषरूपेण वा । तत्र न तावदाद्य पक्ष , यतस्तेन प्रतिबद्धेन, अप्रतिबद्धेन वा । यद्यप्रतिबद्धेन साध्यते, तदा सर्वं सर्वतोऽपि स्यात्, अतिप्रसङ्गात् । ततो यथा "गौरय" इत्युक्ते विषाणी वाहुलेयादि प्रतीतिपथमवितथमवतरति, तथा काष्ठात्रिविष्टपप्रभृतीन्यपि प्रतीयु । तथाहि । यो यो गोशब्दाभिधेय स स विषाणी, यथा शबलशाबलेयादि । गोशब्दाभिधेयाश्च मरीचिविलोचनवचनकुलिशककुप्पय स्वर्गभूतधात्र्यादय इति । न चैतद्भवति, केनाप्यनिष्टत्वात् । तत् "अप्रतिबद्धेन साध्यते" इत्यसाधीय । अथ "प्रतिबद्धेन" इति भण्यते । तेनापि किं वाच्यवाचकलक्षणसबन्धप्रतिबद्धेन, तादात्म्यतदुत्पत्तिसबन्धप्रतिबद्धेन वा । यद्याद्य "प्रतिबन्धप्रतिबद्धेन" इति पक्ष , स न क्षोदक्षम , तस्याघटमानत्वात् । तथाहि । वाच्यवाचकयोरिद स्वरूपम् । वक्तीति वाचक , उच्यत इति वाच्यम् । एतच्चात्र न युज्यते । साधनेन हि साध्य धर्मिणि साध्यते, न चोच्यते "साध्यत इति साध्य, साधयतीति साधक" इति कृत्वा तत्र प्रथमो विकल्प । नापि तादात्म्यसबन्धसबद्धेन, साध्यसाधनयोर्भेदेनाभ्युपगमात्तादात्म्यस्याभावात् । अथ "तदुत्पत्तिलक्षणसबन्धप्रतिबद्धेन साधनेन" इत्युच्यते, तदा तदुत्पत्तौ किं साधन साध्यादुत्पद्यते, साधनाद्वा साध्यम् । न तावत्साधनात्साध्य समुत्पद्यते । तथाहि साध्य साधननियत स्यात्, न साधन साध्यनियतम् । तत साधनात्कथ साध्यावगतिर्भवेत्, "यदनुवादेन यद्विधीयते तत्तत्र नियत, यद्यत्र

---

1 A शाबलेयादि  2 A यद्याद्य

नियत तत्तेन व्याप्त, यद्येन व्याप्त तत्तस्य गमक, नान्यस्य' इति वचनात् । अथैतद्द्वयादेवाद्य समाश्रीयते, तदा तेन साध्येन सह सम्बन्ध साधनस्य कि सामान्यरूपेण, विशेष रूपेण वा । न तावद्विशेषरूपेण, न हि सामान्यरूपसाध नस्य विशेषरूपेण साध्येन सह सम्बन्धो भवति, सामान्य रूपयो सम्बन्धाभ्युपगमात् । इतरथा सामान्यरूपस विशेषरूपेण सम्बन्धाभ्युपगमे न साधनादसिद्धिसौध साध्य मध्यासीत् । तथाहि । साधन साध्यगमकत्वेनेष्यमा गृहीतव्याप्तिक वा भवेत्, अगृहीतव्याप्तिक वा स्यात् यदि "अगृहीतव्याप्तिक" इत्युच्यते, तन्न चतुरचेतसश्च मत्कारि', तथाभूतात्तस्मात्साध्यावगतेरभावात् । दार्स चक्रीवतोरिव नापि गृहीतव्याप्तिक, यतो व्याप्तिरप्यन्वय मुखेन वा स्यात्, व्यतिरेकमुखेन वा, "व्याप्तिर्व्यापक तत्र भाव एव व्याप्यस्य वा तत्रैव भाव" इति वचन द्विधाभिधीयमानत्वात् । द्विधापि किमेकदेशरूपा, सर्व पसहाररूपा वा । न तावत्सर्वोपसहाररूपा । या हि प सपक्षविभागमकृत्वा सामान्येन हेतोर्व्याप्ति प्रदर्श्यते, सर्वोपसहारव्याप्ति, सा च विशेषरूपसाध्यसामान्यरू साधनयो सम्बन्धासंभवेन सभावयितुमपि न युज्यते, पुनर्दर्शयितुम् । अथैकदेशरूपा व्याप्ति, न सर्वोपसहा रूपा, येनेद दूषणमनुषज्यते, तदपि न, तस्या असभवार सभवे वा यदि नाम निदर्शने साधने सति साध्यमुपलब्ध विमेतावता तत्र तस्य नियतत्वमवगम्यते यावन्न यत्र य साधन तत्र तत्र साध्यम् । तदभावे न क्वचिदपि साध मुपलभ्यत इत्येवरूपेण सर्वविषयिणी व्याप्तिरवगतोप र्शिता च । तत्रैकदेशरूपापि । तदेव प्रत्येकमुभयरूपा अन्वयमुखेन व्यतिरेकमुखेन वा व्याप्तेर्विचार्यमाणा

1 A चतुरचेतश्च॰ 2 A B omit

दुर्घटत्वात् "गृहीतव्याप्तिक" इत्ययमपि पक्षो विशीर्यते । तस्मान्न सामान्यरूपविशेपरूपयो सम्बन्धो भवति । नापि सामान्यरूपयो सबन्ध, यतस्तयो किमाश्रितयो, अनाश्रितयोर्वा । न तावदनाश्रितयो, तयोरुपलब्धिलक्षणप्राप्तयोरप्यनुपलभ्यमानत्वेन सबन्धस्य ग्रहीतुमशक्यत्वात् । आश्रितयोरपि किं व्यक्त्याधारयो, तद्व्यतिरिक्तयोर्वा । यदि व्यतिरिक्तयो, तन्न, तयोरसभवादेव, सभवित्वे वोपलब्ध्यादिप्रासे । व्यक्त्याधारयोराश्रितयोरपि[1] किं साध्यमानसाध्ययुक्व्यक्त्याश्रितयो, अपरस्थितयोर्वा । न तावत्प्रथम पक्ष, एकव्यक्तिसश्रितयो प्रतिबन्धस्याग्राह्यत्वात्, "द्विष्ठ सबन्ध" इति वचनात् । अथान्यस्थितयोस्तयोरपि किं पूर्वमापेक्षयो, निरपेक्षयोर्वा । यद्यनन्तर पक्ष, तदानन्तरोक्त एव दोष । अथ सापेक्षयो, तत्रापि साध्यमानधर्माश्रयनियतव्यक्तिदृष्टान्तलक्षणापरव्यक्त्योरेकस्मिन्देशे युगपदवस्थानाभावात्कथ तदाश्रयत्व, येन सबन्धो गृह्यते । गृहीतोऽपि न साध्यसिद्धेरङ्गत्वाय जायते । य किल सकलदेशकालव्याप्त्या प्रतिबन्ध साध्यसाधनयो सिद्ध, स एवाभिमतसाध्यसाधनाय साधीयान्, न पक्षसपक्षमात्रगृहीत । तस्मान्न सामान्यरूपयोरपि सबन्धग्रह । भूयोऽपि । सामान्यरूप साधन किमुभयाश्रित, अनुभयाश्रित वा साध्य साधयति । यदि तावदनुभयाश्रित, तन्न, साधकत्वानुपपत्तिप्रसङ्गात् । तथाहि । यन्न प्रतिज्ञामाश्रित नापि दृष्टान्तित, तत्साधन साध्य कथ पक्षे साधनभावेन साधयेत् । नाप्युभयाश्रित, तस्यासभवात् । तथाहि । यत्साधनस्वरूप सपक्षे समस्ति पक्षेऽपि किं तदेव, आहोस्विदन्यत् । यद्यन्यत्, कथमुभयाश्रित, अन्यत्वादेव । अथ तदेवेति, कथमेकमेककालमुभयमाश्रयतीति । किं च । प्रत्येकपक्षप्रतिपादितदोपा-

---

1 A व्यक्त्याधारयोरपि

नुपङ्गेनैवोभयात्मकपक्षस्य दुष्टत्वान्नोभयाश्रित साधन साध्यसिद्धिं निदध्यात् । तन्न सामान्यरूपेण । अस्तु तर्हि विशेषरूपेण तेनापि किं यस्य साध्यधर्मं साधयितुमिष्ट, तद्धर्म्याश्रितेन, दृष्टान्तधर्म्याश्रितेन, उभयधर्म्याश्रितेन वा । तत्र यद्याद्य पक्ष, तदा दृष्टान्त साधनविकलतालक्षण दोषमपीकालुष्यमङ्गीकुर्यात् । अथ दृष्टान्तधर्म्याश्रितेन साधनेन साध्यत इति पक्ष, तत्राप्यन्यधर्मस्यान्यत्राविद्यमानभावेन साधनस्यासिद्धान्ताभिधानो दोषोऽनुधावमानो न मनागपि विश्राम्यति । नाप्युभयगतेन, त्रिरेपरूपत्वछाने प्रत्येकनिराकरणेनोभयात्मकस्य निराकृतत्वाच्च, "प्रत्येक ये प्रसज्यन्ते द्वयोर्भावे कथ न ते" इति वचनात् । अथाचक्षीथा इत्थ "धर्माणा किमेते साध्यधर्माश्रयाश्रिता सपक्षलक्षणाश्रयाश्रिता वा' इत्यादि यदि कल्प्यते, तदाद कार्यरजान्यत्वलेशेन "यत्साध्यासिद्धिदर्शन तत्कार्यसम" इति वचनात्कार्यसमाभिधानम् । अनाबाध जात्युत्तर भवता समासज्येतेति चेत्, तदयुक्त, एतत्स्वरूपस्यापरिज्ञानात् । तत्स्वरूप ह्येव पूर्वाचार्यैरभ्यधायि । यत्र हि साध्येन सह सामान्यसाधनधर्मस्य विपक्षे बाधकप्रमाणप्रवृत्त्या प्रतिबन्धे सिद्धेऽपि धर्मविशेषमाश्रित्य प्रेरणा क्रियते, तज्जात्युत्तर भवति । यत्पुन सामान्येन प्रतिबन्धसिद्धभावेन धर्मभेदकल्पना विधीयते, तत्सर्वथैव तद्गन्धमपि न स्पृशतीति । अतोऽयुक्त "यदुत कार्यसम जात्युत्तर" इति । अपि च । कीदृशमपि समस्तु, पर तदपि साध्यसिद्धिनिबन्धनाय विधीयमान किं स्वतन्त्रभावेन वा स्यात्, प्रसङ्गसाधन वा भवेत् । यदि स्वतन्त्रेण, तदा हेतुरन्यतमासिद्धत्वदोषदूषित काचकामलोपजनितान्ध्य-

---

1 B C omit 2 B adds इति विकल्पौ 3 A adds कल्पना

परिकीरितस्वरूपलोचन पुरष इव न साध्यावगमनमार्गनिभालनकरणप्रवण स्यात् । तथाहि । यथाविध साधनमनाधमस्माकमधिगतप्रसिद्धिक कि भवतामपि तादृश, कि वान्यादृशमिति विकल्पद्वयम् । तत्र यद्याद्य कल्पनापथमवनार्यते, स नावतरति । तथाह्यधिगतनिरवधिसाधनपरपरापरिचयव्यसनो भवदभ्युपगम प्रसज्येत । तत स्वातन्त्र्येण साधनमभ्युपेत्यास्मदभिमतसाधनस्वीकार कुर्वक्षसमत्पक्षमेव समर्थयसे । तव प्रथमो विकल्प । नापि द्वितीय । तस्मिन्नभिधीयमाने यथा ममेद साधन सिद्ध न तथा तव, अन्यरूपेण भवत सिद्धत्वात् । अत कथ नान्यतरासिद्धता हेतो स्यात् । अथ शब्दमात्रेण सिद्ध एवावयो कथमसिद्ध इति चेत् । न, शब्दमात्रसिद्धावपि न हेतुसिद्धि । वस्तुन एव हेतुत्वेन वस्तुनो हि वस्तुसिद्धि ,—

तस्यैव व्यभिचारादौ शब्देऽप्यव्यभिचारिणि ।
दोषवत्साधन ज्ञेय वस्तुनो वस्तुसिद्धित ॥

इति वचनात् । तर्हि "स्वातन्त्र्येण" इति । अथ प्रसङ्गसाधनमिति पक्षसमाश्रयणादनन्तरोदितदोषापादनाभाव एव, तथापि विपर्यये गच्छतो न हेतोर्बाधकप्रमाणोपदर्शन, तदभावादनैकान्तिकत्व हेतो । को ह्यत्र प्रतिबन्ध । यद्विवक्षितमेव साध्य साधयति साधन नाविवक्षितमपि । तस्मात्प्रसङ्गसाधनमिद साधनमुपन्यस्यत इत्यपि पक्षोऽन्तरिक्षविसप्रसूनसत्तामाश्रयतीति कथ साधनेन साध्यावगतिरित्यादि हेतुस्वरूपविचारणे वादिवृन्दारकविजयकरणे भो भो पण्डित निरवद्यविद्यामण्डनमण्डित यदेतदास्माकीन सस्कृत केनाप्यतिरस्कृतमुद्दण्डदण्डकसार तद-

1 A हेतु सिद्धि 2 A सिद्धे BC add तथा चोक्त 3 A omits तत्

र्णेन इवालब्धपार भवदिच्छयोच्यते मुच्यते वेति वादिष टमुद्गरोऽय वादे ॥ ६ ॥

[VII]

## [ अथ सामग्रीभङ्गवाद ]

कैश्चित्सामग्र्यभ्युपगम्यते । सा च समग्रेभ्यो भिन्ना वाभ्यु पगम्यते, अभिन्ना वा । तत्र यदि भिन्ना, तदा तस्यास्तैः सह कोऽय सवन्ध किं तादात्म्यलक्षण, तदुत्पत्तिलक्षणो वा । तत्र न तावत्तादात्म्यलक्षण सवन्धो जाघटीति, यत स्तादात्म्ये हि सामग्री वा स्यात्, समग्रा वा स्युरिति । अथ तदुत्पत्तिलक्षण, तदा हि सामग्र्या समग्रा जन्यन्ते, समग्रैर्वा सामग्री जन्यत इति पक्षद्वयम् । तत्र न ताव त्सामग्र्या समग्रा जन्यन्ते, स्वकारणकलापादेव तदुत्पत्ति रिति । अथ समग्रै सामग्री जन्यते, तत्र प्रष्टव्य "सा तैर्जन्यतेऽन्यसामग्रीसव्यपेक्षै, तन्निर्व्यपेक्षैर्वा" । तत्र यद्य न्यसामग्रीमव्यपेक्षै सामग्री जन्यते, तदापरस्या सामग्र्या जननेऽपरा, तथापरस्या अपरेत्यनवस्थादौ स्थ्य स्यात् । अथ निरपेक्षै, तदा यथा समग्रै सामग्री जन्यते, एव कार्यमपि कस्मान्न जन्यत इति । तस्मात्समग्रेभ्यो भिन्ना सामग्री नास्त्येवेति विरम्यते सामग्रीभङ्गवाद ॥ ७ ॥

[VIII]

## [ अथ क्षणिकवाद ]

यत्सत्तत्सर्वं क्षणिक, अक्षणिके क्रमयौगपद्याभ्यामर्थक्रि याविरोधात् । तथाहि । तदक्षणिक वस्तु क्रमेणार्थक्रिया कुर्यात्, यौगपद्येन वा । तत्र न तावदाद्य पक्ष, यतो ऽनागतकालभाविन्यामर्थक्रियाया यत्करणसामर्थ्य तदा द्यक्षणे विद्यते वा न वा । विद्यते चेत्, तदाद्यक्षण एव

1 A omits 2 A omits 3 A पक्ष द्वयम्

किं न सर्वामर्थक्रिया करोति । न विद्यते चेत्, तदाद्य क्षणेऽविद्यमानसामर्थ्य तस्यानागतक्षणे सवृत्तमिति कथ मानित्यत्वम् । अथ सहकार्यपेक्षयानागतक्षणेऽर्थक्रिया करोति । नन्वथ सहकारी किं परस्परोपकारित्वेन, एकार्थक्रियाकारित्वेन वा । तत्र न तावत्परस्परोपकारित्वेन, यतस्तस्य नित्यस्य पदार्थस्योपकारो विधीयमानोऽभिन्नो वा निधीयते, भिन्नो वा । तत्र यद्युच्येत "अभिन्न," तदानीं तस्यात्मस्वरूपवद्विद्यमानत्वात्किं तेन सहकारिणा क्रियते । तथा तत्करणे तदभिन्नस्य नित्यपदार्थस्यापि करण स्यात् । अथ भिन्न, तदा भिन्नोपकारकरणेऽपि न तस्य किंचिदुपकृत स्यात् । अथ तत्सवन्ध्युपकार क्रियते, ननु सवन्ध किं तादात्म्यलक्षण, तदुत्पत्तिलक्षण, समवायलक्षणो वा । तत्र न तावत्तादात्म्यलक्षण, भेदपक्षाङ्गीकरणात् । नापि तदुत्पत्तिलक्षण, आद्य एव क्षणे भाविकार्योत्पादकोपकारप्रसङ्गात् । अथ सहकार्यपेक्षया करोति, तत्रापि ब्रूम । किमिद सहकारित्व परस्परोपकारित्व, एकार्थक्रियाकारित्व वेत्याद्यावर्तनेनानवस्था । अथ समवायलक्षण, तन्न, यतोऽसौ समवाय उपकार्योपकारकभावे सत्यभ्युपगम्यते, अनुपकार्योपकारकभावे वा । तत्र यद्याद्य पक्ष, तदा न तदुत्पत्तिव्यतिरेकेण सभवति । तत्र चोक्त एव दोष । अथानुपकार्योपकारकभावे[1] सति, तदातिप्रसङ्ग स्यात् । अथैकार्थक्रियाकारित्वलक्षण सहकारित्वमभ्युपगम्यते । तदप्यनुपपन्न, यत सकलसहकार्यवस्थायां योऽस्य स्वभाव स केवलावस्थायां विद्यते वा न वा । विद्यते चेत्, किं न कार्य करोति । तथा तस्मिन्स्वभावे विद्यमाने तत्सहकार्याकर्षणप्रसङ्ग, निगडाकर्षणे निगडबद्धपुरुषाकर्षणवत् । अथ न विद्यते, तर्ह्यसावुत्पद्यमान

1 A भाव

कथ भावभेद न कुर्यात्, भावभेदलक्षणत्वाद्वस्तुभेदर
अथ यौगपद्येनार्थक्रिया विधत्ते । तत्र, आद्यक्षणे सम
कार्याणि कृत्वा द्वितीयक्षणे किंचित्कार्य करोति वा
वा । करोति चेत्, क्रमकारित्वप्रसङ्ग । अथ न करो
तर्हि सत्त्वमपि नास्ति, अर्थक्रियाकारित्वलक्षणत्व
त्त्वस्य । प्रयोगश्चात्र । ये यद्भाव प्रत्यनपेक्षास्ते तत्स्व
नियता, यथा समनन्तरफला सामग्री स्वकार्योत
विनाश प्रत्यनपेक्षाश्चामी भावा इति स्वभावहेतु ।
यो यदन्वयव्यतिरेकावनुविधत्ते न तस्य कार्यमिति व
दिश्यते, यथा धूमो धूमध्वजान्वयव्यतिरेकानुविध
तत्कार्यत्वेन व्यवह्रियते लोके, अनुविधत्ते च वेग
द्वराद्यापातान्वयव्यतिरेकौ विनाश इति कथ नान
त्वलक्षणो हेतुरसिद्ध इति चेत् । न, तदन्वयव्य
कानुविधानस्यैवासिद्धे । तदसिद्धिश्च विनाशहेतूनाम
चित्करत्वात् । तथाहि । तैर्विनाशो विधीयमानो वस्तु
वा विधीयेत, अवस्तुरूपो वा । वस्तुरूपोऽपि व्यति
र्वो, अव्यतिरिक्तो वा । अव्यतिरिक्तश्चेत्, वस्तुवत्क्षि
त्वात्कि विनाशहेतुभिर्विधेय, विधाने वा भिन्नकाल
द्धेत्यन्तरजन्यत्वाच्च भिन्न । उक्त च । अयमेव हि
भेदहेतुर्वा विरुद्धधर्माध्यास कारणभेदश्च । ततोऽपि
भेद, विश्वमेकद्रव्य स्यात् । व्यतिरेकपक्षे तु न वि
द्विनाशहेतुभिर्विनाश्यस्यापकृत स्यात् । तत्सबन्धिनो वि
शस्य कारणात्कथ नापकृतमिति चेत्, कस्तत्र सबन्
न तावत्तादात्म्यलक्षणो व्यतिरेकपक्षे सभवति । अ
तदुत्पत्तिस्वरूप, विनाशस्य विनाशहेतुभ्य एव प्रादु
यात् । न च वक्तव्य "तत्कृतेन विनाशेन विनाशस्य वि

शकरणादुपकारोऽपि व्यतिरेकाव्यतिरेकविकल्पद्वयानतिवृत्तेर्नाप्यवस्तुरूप," तस्य करणेऽवस्तुत्वविरोधात् । तथाहि । यत्स्वकारणकलापायत्तजन्मक तत्समस्त वस्तुत्वेन व्यवह्रियते, यथा घटपटादि । तादृशश्चासौ विनाशो भवद्भिरभ्युपगम्यत इति नास्यावस्तुरूपस्य करणम् । अथ ब्रूषे । नासौ विनाशो वस्तूत्पत्तिक्षणात्पाश्चात्यक्षणे प्रादुर्भवति, तदा वस्तुन एवानिष्पत्ते, नापि वस्तूत्पत्तिक्षणे, तस्योत्पादविरुद्धत्वात्, नापि वस्तूत्पत्त्यनन्तरक्षणाद्द्वितीयक्षणे, तदा वस्तुनो विनष्टत्वात्, विनष्टस्य च विनाशकरणे विनाशाविरामप्रसङ्गात्, किं तु वस्तूत्पत्त्यनन्तरक्षण एव । ततश्च कादाचित्कत्वात्सहेतुकत्वापत्ति स्तम्भादिभाववत् । उक्त च ।

नित्य सत्त्वमसत्त्व वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावाना कदाचित्कत्वसभव ॥

किं च । अहेतुकत्वादसौ व्योमादिवन्नित्य, किं वाकाशकुशेशयवदसन्निति विकल्पौ । आद्ये पक्षे वस्त्वनुत्पादप्रसङ्ग आपद्येत, वस्तूत्पादप्रत्यनीकस्य विनाशस्यावस्थितत्वात् । द्वितीयविकल्पे तु क्षणक्षयिता प्रत्ययो निरालम्बन स्यात् । भावेषु तदेतदसमीक्षिताभिधानम् । तथाहि । कतर विनाशमूरीकृत्यैतन्निगद्यते भवता । किं क्षणिकवस्तुस्वभाव, अवस्तुस्वभाव वा । प्रथमपक्षे सहेतुकत्व सिद्ध न साध्यते तस्य स्वहेतुभ्य एवोत्पादाभ्युपगमादिति कथ विशरारुताप्रत्ययो निरालम्बन स्यात्, वस्तूत्पत्त्यनन्तरभावित्व वा घटेत । द्वितीयपक्षे तु नित्यादयो धर्मा वस्तुसभविनोऽवस्तुनि समस्तशक्तिविरहलक्षणे विनाशे समाशङ्क्यमाना कथ न भवतो निविडजडिमानमाविष्कुर्यु, असत्त्व तु तस्य स्वरूपत सिद्धमेव । तथाहि । किं विन...
नश्वरस्वभावाना भावाना विनाशो विधीयते,

भावाना वा । आद्ये पक्षे कक्षीक्रियमाणे विनाशहेतूनामानर्थक्य, यतो यो य स्वभाव स स्वहेतोरेवोत्पद्यमानस्तादृशो भवति, न पुनस्तद्भावे हेत्वन्तरमपेक्षते, यथा प्रकाशद्रवोष्णकठिनादिस्वभावा प्रदीपादयो न तत्स्वभावतायां हेत्वन्तरापेक्षिण, विनश्वरस्वभावाश्च भावा भवद्भिरभ्युपगम्यन्ते । अथ यथा बीजमङ्कुरोत्पादस्वभावमपि तदुत्पादने जलेलानिलादिक सहकारिकारणमपेक्षते, तद्वद्भावा अपि विनाशे भविष्यन्तीति चेत् । तन्न, यत कतरस्य बीजस्य कारणापेक्षाभिधीयते, किमन्त्यावस्थाप्राप्तस्य कुशूलाद्यवस्थस्य वेति विकल्प्यते । अन्त्यावस्थाप्राप्त तावद्धेत्वन्तरनिरपेक्ष स्वकार्यं जनयत्येव, कुशूलाद्यवस्थ तु तज्जननस्वभावमेव न भवति, कारणकारणत्वात्[1] । नापि "अविनश्वरस्वभावाना भावाना विनाशो विनाशहेतुभिर्विधीयते" इत्यभ्युपगन्तव्य, वस्तूना स्वभावान्यथात्वस्य पुरदरशतैरपि कर्तुमशक्यत्वात् । अथ यथा ताम्रादीना कठिनादिस्वभावाना वह्न्यादिभिरन्यथात्व विधीयते, तथाविनश्वरस्वभावानामपि विनाशो विधातव्य इति चेत् । न, तत्रान्यथाकरणस्य दुरुपपादत्वात् । तथाहि । तस्मादन्यथात्व भिन्न वा विधीयते, अभिन्न वा । अभेदे स एव निर्वर्तितो भवति, भेदे तु न किञ्चित्तस्यापकृत स्यात् सबन्धाभ्युपगमे दूषणमुदीरितमेवेति न स्वभावान्यथात्वकरणमुपपद्यते, यतोऽपि नाम भावा स्वयमेव भवेयुर्न पुन स्वय विद्यमाना स्वस्वभाव परित्यज्य स्वभावान्तरमुररीकुर्यु । अथ कथ तर्हि ताम्रादीना कठिनादिस्वभावापरित्यागेन द्रवादिरूपोपलम्भ इति चेत् । अत्रोच्यते । वस्तुव्यवस्थाकठिनादिस्वभावस्ताम्रादि स्वरसतो निरुध्यमानो वह्न्यादिकारणम-

1 A कारण कारणत्वात्

पेक्ष्याग्रेतन द्रवादिरूप ताम्रादिक्षणमुत्पादयति । सोऽपि स्वरसतो निरुध्यमानो वातादिकारणमपेक्ष्य कठिनादिरूप जनयतीति सर्वथा सहेतुकत्व विनाशस्य नाभ्युपगन्तु युक्तम् । अभ्युपगमे वा सहेतुकत्वादेव कृतकत्व, कृतकत्वाच्चानित्यत्व, अनित्यस्य च विनाशस्य विनाशे पुनर्वस्तूनामुन्मज्जनप्रसङ्ग इति यथा विनाशस्य सहेतुकत्व विशुद्धबुद्धिभिर्बौद्धमतानुसारिभिर्विचार्यते तथा तथा युक्तिरिक्ततामेव बिभर्तीति स्थितम् इति क्षणिकवाद ॥ ८ ॥

[IX]

## [ अथ वादिमीनानाय ]

इह हि निर्विकारमतय सकलभुवनतलप्रख्यातमतयो निरवशेषविद्यापारावारपारगामिनो मीमासका बौद्धाभिप्रेता साकारता मीमासन्ते । प्रयोगश्चायम् । निखिलनिशदानिशदविज्ञप्तीना साकारता पक्षीकृता न विद्वज्जनमनासि रञ्जयतीति साध्यो धर्म प्रतीतिविषयातीतत्वात् । यद्यत्प्रतीतिविषयातीत तत्तन्न विद्वज्जनमनासि रञ्जयतीति, यथा सिन्धुरमकरमयूरादि गोमहिषरूपतया प्रतीयमानम् । तद्रूपतया प्रतीतिविषयातीता च निखिलविज्ञप्तीना साकारता । ततश्च न विद्वज्जनमनासि रञ्जयतीति व्यापकानुपलब्धि । तथाहि । साकारता ज्ञानस्याप्रतीयमानाभ्युपगम्यते, प्रतीयमाना वा, प्रतीतिरपि प्रमाणेन वा, अप्रमाणेन वा, प्रमाणेनापि प्रत्यक्षेण, अनुमानेन वा, प्रत्यक्षेणापि योगिज्ञानेन, स्वसवेदनेन, चक्षुरादिज्ञानेन वा, चक्षुरादिज्ञानमपि स्वज्ञानस्य साकारता प्रतिपद्यते, ज्ञानान्तरस्य वा, ज्ञानान्तरस्यापि स्वजातीयस्य, विजातीयस्य वा, स्वजातीयस्याप्येकसततौ, भिन्नसततौ वा, सर्वस्य च भिन्नस्य ग्राहक, उताग्राहक, ग्राहकमपि चक्षुरादिज्ञान स्वप्रामाण्य-

1 B omits

निश्चये, अन्यथा वा, प्रामाण्यनिश्चयोऽपि स्वत , परतो वा, परतोऽपि प्रत्यक्षत ,अनुमानतो वा, अनुमानेनापि साध्य साधनसम्बन्धनिश्चयोत्पन्नेन, अन्येन वा, निश्चयोऽपि प्रत्यक्षेण, अनुमानेन वा, अनुमानेनापि किं तेनैव, अनुमानान्तरेण वा, सम्बन्धोऽपि तादात्म्यलक्षण , तदुत्पत्तिलक्षणो वा, समवायलक्षण , सयोगलक्षणो वा, सयोगलक्षणोऽपि सयुक्तयो ,असयुक्तयोर्वा, असयुक्तयोरपि सयोगयोग्ययो , अयोग्ययोर्वेति सप्तत्रिंशद्विकल्पा ॥ ३७॥

तत्र यद्यप्रतीयमाना, अय पक्ष सोऽसगत , अप्रतीयमानाया सत्त्वस्यासिद्धे । अथ प्रतीयमाना, तत्र विकल्पद्वय कृत, "प्रमाणेन वा, अप्रमाणेन वा" इति । तत्र यदि "अप्रमाणेन" इति पक्ष , सोऽसगत , अप्रमाणस्याकिंचित्करत्वात् । अथ प्रमाणेन, तत्रापि विकल्पद्वय कृत "प्रमाणेनापि प्रत्यक्षेण, अनुमानेन वा" इति । तत्र प्रत्यक्ष यदि योगिज्ञानमभिप्रेत, तदा वक्तव्य "तद्योगिज्ञान स्वसाकारतानिश्चये सति ज्ञानान्तरस्य साकारता प्रतिपद्यते, अनिश्चये वा" । तत्र यद्याद्य पक्ष , तदा साकारतानिश्चय स्वत , परतो वा । यदि स्वत , तन्न सभवति, स्वात्मनि क्रियानिरोधात् । अथ परत , तदा किं प्रत्यक्षेण, अनुमानेन वा । यदि प्रत्यक्षेण तदयुक्तम् । प्रत्यक्ष हि रूपादिविषय रूपादिकमेवावलम्बते, न ज्ञानान्तरम् । ततश्च तत्राप्रविष्ट कथ तस्य साकारता निश्चिनोति । अथानुमानेन, तदप्ययुक्तम् । तथाहि । अनुमान लिङ्गादुत्पद्यते, लिङ्ग च विवक्षितभावधर्म , अन्यभावधर्म , अभावधर्म , उभयधर्मो वा । तत्र यदि विवक्षितभावधर्मो हेतुरिति निश्चीयते, तदानुमानवैयर्थ्यम् । अथान्यभावधर्मो हेतु , तदा व्यधिकरणासिद्धो हेतु । अथाभावधर्म , तदा विरुद्धो हेतु । अथोभयधर्म , तदानैकान्तिको हेतु । तत्रानु-

मानेनापि साकारता निश्चीयत इति न योगिज्ञानं साकारतानिश्चये ज्ञानान्तरस्य साकारता निश्चिनोति। नापि वेदनेन ज्ञानान्तरस्य साकारता निश्चीयते,स्वात्मनि क्रियाविरोधात्। न हि तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं स्पृश्यते। नापि चक्षुरादिज्ञानेन, यतस्तत्र विकल्पद्वयं कृतं "स्वज्ञानस्य साकारतां निश्चिनोति, ज्ञानान्तरस्य वा"। तत्र न तावत्स्वज्ञानस्य साकारतां निश्चिनोति, तद्विषयादुत्पन्नं विषयस्वरूपमेवावलम्ब्यते न च स्वज्ञानमेवावलम्ब्यते, तेन सह तस्य सम्बन्धाभावात्। नापि ज्ञानान्तरस्य साकारतां निश्चिनोति, यतश्चक्षुरादिज्ञानं ज्ञानान्तरग्राहकं सत् साकारतां निश्चिनोति, अग्राहकं वा। तत्र यदि ग्राहकं, तदयुक्तम्। चक्षुरादिज्ञानं हि रूपादुत्पन्नं रूपादिकमेवावलम्ब्यते, न ज्ञानान्तरम्। ततश्च कथं साकारतां निश्चिनोति। अथाग्रहं, तदप्ययुक्तम्। यद्यस्स्वरूपं न जानाति तत्कथं तस्य साकारतां निश्चिनोति। एतेनैव "स्वजातीयस्य, विजातीयस्य, एकसंततौ भिन्नसंततौ वा" इति विकल्पचतुष्टयं निराकृतं द्रष्टव्यम्। चक्षुरादिज्ञानमपि स्वप्रामाण्यनिश्चये, अन्यथा वा। तत्र यदि "स्वप्रामाण्यनिश्चय" इति पक्षः, तत्र "प्रामाण्यनिश्चयः स्वतः परतो वा" इति विकल्पद्वयं कृतम्। तत्र यदि स्वतः, तदयुक्तं, यतस्तस्यैव निश्चये निश्चेयत्वं निश्चायकत्वं च न संभवति, कर्तृकर्मणो रत्यन्तभिन्नत्वात्। अथ परतः, तदा वक्तव्यं "कारणगुणज्ञानाद्बाधाभावाद्वा"। तत्र यदि कारणगुणज्ञानात्, तदा तत्रापि वक्तव्यं "किं कारणगुणज्ञानं स्वकारणगुणज्ञानापेक्षं सत् प्रमाणकारणगुणनिश्चायकं भवति, अनपेक्षं वा"। तत्र यदि सापेक्षं, तदानवस्था। अथानपेक्षं, तर्हि कारणगुणज्ञानापेक्षया किं प्रयोजनम्। अथ बाधकाभावात्, तदा सो बाधाभावो ज्ञातः सन् प्रामाण्यनिश्चायको

भवति, अन्यथा वा । तत्र यदि ज्ञात , तदा किं तेनै
आहोस्विदपरस्माद्बाधाभावात् । तत्र यदि तेनैव, तदेत
तराश्रयदोष । तथाहि । तत्प्रामाण्ये सति बाधाभावं
श्चयो बाधाभावनिश्चये तत्प्रामाण्यमिति व्यक्तमितरेत
श्रयत्वम् । अथ "अपरस्माद्बाधाभावाद्बाधाभावनिश्चय
इति पक्ष , तर्ह्यनवस्थालक्षणो दोष । किं च । बाधाभा
ज्ञानस्य सत्यत्व कुत प्रमेयसत्यत्वात्, स्वादक्षत्वाद्
तत्र यदि प्रमेयसत्यत्वात्, तदा प्रमेयसत्यत्वे बाधाभाव
त्वत्व, बाधाभावसत्यत्वे प्रमेयसत्यत्वम् । अथ द्विती
तदा तत्राप्यपरस्वादापेक्षायामनवस्था, तज्ज्ञानान्तराव
न प्रामाण्यनिश्चय । किं च । परतोऽपि, प्रत्यक्षेण, अ
मानेन वेति विकल्पद्वय कृतम् । तत्र यदि "प्रत्यक्षेण
इति पक्ष , असावसगत', यत प्रत्यक्षमिन्द्रियसवद्धे
उत्पद्यते, न च ज्ञानान्तर इन्द्रियसबन्धोऽस्ति, तस्या
न्द्रियत्वात् । तत्कथ प्रत्यक्ष तत्प्रामाण्यनिश्चायक भव
ति । अथ "अनुमानेन" इति पक्षः, तदा तत्र विकल्प
कृतम् । अथानुमानेनापि, साध्यसाधनसंबन्धनिश्चयो
क्षेन, अन्येन वेति । तत्र यदि साध्यसाधनसबन्धनिश्च
त्यक्षेन, तदा तत्रापि विकल्पद्वय कृत "निश्चयोऽपि प्र
क्षेण, अनुमानेन वा" । तत्र यदि "प्रत्यक्षेण" इति प
तदा किं धर्मविषयेण, धर्मिविषयेण, उभयविषयेण व
तत्र यदि धर्मविषयेण, तदयुक्त, यत संबन्धो द्विष्ठ
कत्र धर्ममात्रग्रहणे निश्चितो भवति । धर्मिग्रहणेऽप्येत
वाच्यम् । अथोभयविषयेण, तदा तत्र वक्तव्य "तदुभ
विषय प्रत्यक्ष किमेकाकार, उभयाकार, अनुभयाकार
इति त्रयो विकल्पाः । तत्र यद्येकाकार, तदा कथमुभय
ग्राहक भवति । अथोभयाकार, तच्च न सभवति विरो

धस्योभयविधिनान्तरीयकत्वात् । तत्र प्रत्यक्षेण सवन्धनिश्चय । अथानुमानेन, तत्र च विकल्पद्वय कृत "किं तेनैव, अपरेण वा" इति । तत्र यदि तेनैव, तदेतरेतराश्रयलक्षणो दोष । अथान्येन, तदानवस्थालक्षणो दोष. । सवन्धोऽपि तादात्म्यलक्षण , तदुत्पत्तिलक्षणो वेति । तत्र यदि तादात्म्यलक्षण', तदासौ न गम्यगमकभावनिवन्धन, गम्यगमकभावो भेदे सति भवति, तादात्म्ये च सति साधनप्रतीतिकाल एव साध्यस्यापि प्रतिपन्नत्वात् । अथ न प्रतीयते, तर्हि यस्मिन्प्रतीयमाने यन्न प्रतीयते तत्ततो व्यतिरिक्तमेव, यथा घटस्वरूपे प्रतीयमाने पटस्वरूपमप्रतीयमान ततो व्यतिरिक्तमिति । न प्रतीयते च साधनप्रतीतिकाले साध्य, ततश्च न तयोस्तादात्म्यम् । तदुत्पत्तिलक्षणोऽपि सवन्धो न गम्यगमकभावनिवन्धनम् । तथाहि । कार्य त्वाविशेषे यथा धूमो वह्नेर्गमक , तथा वक्तृत्वमपि किं नासर्वज्ञस्य निश्चायक भवति । नापि समवायलक्षण' सवन्धः, प्रामाण्यसमवेतलिङ्गाभावात् । नापि सयोगलक्षण सवन्ध , यतस्तत्र विकल्पद्वय कृत "सयोगोऽपि सयुक्तयो , असयुक्तयोर्वा" । तत्र यदि सयुक्तयो , तदा सयोग सामान्याश्रयो वा, विशेषाश्रयो वा । यदि सामान्याश्रय', तदा धूमवद्वह्निरपि धूमस्य गमको भवेत्, विशेषाभावात् । अथ विशेषाश्रय , तदा धूमस्तार्णादिभेदाना गमक स्यात् । तन्न सयोगवशाद्गम्यगमकभाव । अथासयुक्तयो , तत्र विकल्पद्वय कृत "योग्ययो , अयोग्ययोर्वा" इति । तत्र न तावद्योग्ययो. । तथाहि । किं पूर्वं सयोग उत्तरकाले योग्यता, अथ पूर्वं योग्यतोत्तरकालसयोग । तत्र यदि पूर्वं सयोग , तदोत्तरकालभाविन्या योग्यतया किं प्रयोजन, सयोगस्य वृत्तत्वात् । अथ पूर्वं योग्यतोत्तरकाल सयोगः, तदासौ योग्यता सयोगाभावे कथ निश्चीयते,

कार्यगम्यत्वात्कारणशक्तीनाम् । तत्र " योग्ययो " इति वाच्यम् । अथायोग्ययो , तन्न युक्तम् । न ह्ययोग्ययो॰ साध्यसाधनयोरिव सयोग सभवतीत्युपरम्यते ॥ इति वादिमीनानाय ॥ ९ ॥

[ X ]

## [ अथ शाब्दप्रमाणनिराकरणम् ॥ ]

यन्निर्विषय तत्समस्तमेवाप्रमाण, यथा मरीचिकासु जलविज्ञानम् । निर्विषय चेद शाब्दविज्ञानम् । न चायमसिद्धो हेतु , यतोऽस्य विषय परिकल्प्यमान स्वलक्षण वा स्यात्, सामान्य वा । न तावत्स्वलक्षण, तस्य सकेतवशेन विषयत्वापत्ते , स च विविक्तक्षणक्षयिपरमाणुलक्षणे कर्तुमशक्य । तथाहि । प्रथमे क्षणे स्वलक्षणदर्शन[1], द्वितीय क्षणे सकेतलक्षणाध्यवसाय , तृतीयक्षणे सकेत कर्तव्य , तस्मिश्च स्वलक्षणस्य क्षणक्षयिकत्वेन क्षीणत्वात्सकेतकरणानुपपत्ते । नापि सामान्य, तस्य स्वत एवाविद्यमानत्वात् । तथाहि । यत्प्रमाणगोचरचारिता नाचरति, न तत्सव्यवहृतिपथमवतरति, यथाकाशकुशेशयम् । नाचरति च प्रमाणगोचरचारिता सामान्यमिति । न चायमसिद्धो हेतु , यतस्तत्सामान्य प्रत्यक्षप्रमाणपरिच्छेद्य वा स्यात्, अनुमानसविलसनेद्य वा । तत्र न तावदाद्य पक्ष कक्षीकरणीय , यत सकलव्यक्तिगत सामान्य तत्प्रत्यक्षीकरणे समस्तव्यक्तिप्रत्यक्षत्वेन सर्वज्ञत्वापत्ति स्यात्, न चेष्यते । नापि द्वितीय , यतोऽनुमान प्रतिबद्धलिङ्गबलेनोदीयमान प्रमाणतामासादयति । स च सबन्ध कि प्रत्यक्षेण गृह्यते, अनुमानेन वा । तत्र न तावत्सामान्यरूपावधारणानिपुणेन प्रत्यक्षेण सबन्धग्रहण युज्यते, यत द्विष्ठसबन्धसवित्तिनैकरूपप्रवेदना । नाप्यनुमानेन, यतोऽनुमानेन सबन्धो गृह्य-

---

1 B स्वलक्षणं दर्शन

माण किं तेनैवानुमानेन गृह्यते, उतानुमानान्तरेण वेति द्वयी गति । तत्र यदि तेनैवानुमानेनाय पक्षोऽङ्गीक्रियते, तदेतरेतराश्रयदोष , यतो न यावदनुमान प्रवृत्त न तावत्सम्बन्धग्रह , न यावत्सम्बन्धो गृहीतस्तावदनुमान न प्रवर्तेत इति स्फुटमेवेतरेतराश्रयत्वमिति । अथानुमानान्तरेणेति, तर्ह्यनवस्था । तथाहि । अपरेणानुमानेन सबन्धो ग्रहीतव्य , तदप्यनुमान सम्बन्धग्रहपूर्वक भवति, तस्यापि सम्बन्धोऽपरेण ग्रहीतव्य इत्यनवस्था प्रवर्तमाना वर्षशतेनापि न निष्ठा प्राप्नोति । किं च । तत्सामान्य व्यक्तिभ्यो भिन्न वा स्यात्, अभिन्न वेति विकल्पद्वयम् । तत्र यद्य भिन्न, तर्हि व्यक्तिभ्य सामान्यमभिन्न सामान्याच्च व्यक्तय इति सामान्य वा स्याद्व्यक्तयो वा न द्वितयम् । तथा तत्सामान्यमभिन्न सत्किं व्यक्तिभि' सार्धं समुत्पद्यते, व्यक्त्यन्तराद्वा समागच्छति पूर्वमेव वा तद्देशे समासीत् । तत्र यद्याद्य पक्ष , तर्हि व्यक्तिवदनित्यत्वप्रसङ्ग । अथ द्वितीय , तर्हि सक्रियत्व स्यात् । अथ तृतीय , तर्हि व्यक्तिशून्ये देशेऽवस्थान प्राप्नोति । न चेष्यते । तथाहि व्यक्तिविनाशे किं सहैव विनश्यति, अथ व्यक्त्यन्तर याति, उत तद्देश एव तिष्ठति । दूषणानि प्रागुक्तान्येव । तथा चोक्तम् ।

व्यक्तिजन्मन्यजाता चेदागता नाश्रयान्तरात् ।
प्रागासीन्न च तद्देशे सा तया सगता कथम् ॥ १ ॥
व्यक्तिनाशे न चेन्नष्टा गता व्यक्त्यन्तर न च ।
तच्छून्ये न स्थिता देशे सा जाति केति कथ्यताम् ॥२॥

अथ भिन्न, तर्हि तद्व्यावृत्ताकार वा स्यात्, अनुगताकार वेति विकल्पद्वयम् । तत्र यदि व्यावृत्ताकार, तर्हि व्यक्तिरूपतैव तस्य स्यात्, न किंचित्सामान्यम् । अथानुगताकार; सोऽनुगम स्वरूपे, पररूपे वेति विकल्पौ ।

चेत्स्वरूपेऽस्य पक्षोऽभ्युपगम्यते, सोऽनुपपन्न, स्वरूपेऽनुगमाभावात् । अथ पररूपे, ननु पररूपेऽप्यनुगम किं तादात्म्यात्, समवायाद्वा । तत्र न तावत्तादात्म्यात्, व्यतिरेकपक्षकक्षीकारात् । नापि तत्समवायात्, सामान्यस्य समवायादर्थान्तरत्वेनाभ्युपगमात् ॥

अथ यदबाधितबोधगोचरचारि तत्समस्तं समस्ति, यथा स्तम्भकुम्भाम्भोरुहादयः पदार्थाः, अबाधितगोचरचारि च सामान्यमिति सामान्यसाधकस्यानुमानस्य विद्यमानत्वात्कथं प्रमाणाभावो भवता शब्द्येतेति ब्रूषे । तदप्यनुपपन्नं, अबाधितबोधगोचरस्यापि वृत्तेर्विकल्पैर्बाध्यमानत्वात् । तथाहि । तत्सामान्यं व्यक्तिषु वर्तमानमेकदेशेन वा वर्तेत, सामस्त्येन वेति द्वयी गतिः । यद्युच्यते "एकदेशेन", तदनुपपन्नं, सामान्यस्य निरंशत्वेनाभ्युपगमात् । भवतु वांशः, तथापि किं येनैवांशेनैकस्यां व्यक्तौ तत्सामान्यं वर्तते तेनैवांशेन व्यक्त्यन्तरेऽपि, आहोस्विदंशान्तरेणेत्यत्रापि कल्पनाद्वयम् । तत्र यद्याद्यः पक्षः कक्षीक्रियते तर्ह्येकेनैवांशेन क्रोडीकृतत्वात्सर्वासां व्यक्तीनामेकत्वापत्तिः । अथांशान्तरेण, तर्ह्यंशैः खण्डीभूतत्वात्सामान्यस्य निःसामान्यतापत्तिः स्यात् । अथ सामस्त्येन वर्तते, तर्ह्येकस्यां व्यक्तौ सामस्त्येन वृत्तत्वाद्द्वितीया व्यक्तिः सामान्यशून्या प्राप्नोति । तथा तत्सामान्यमसमानासु व्यक्तिषु वर्तते, समानासु वा । तत्र यद्यसमानासु, तर्हि गोत्वसामान्यं यथा गोषु वर्तते, एवं महिष्यादिष्वपि वर्तेत, अविशेषात् । अथ समानासु, तदा समानत्वं स्वत एव विद्यते, सामान्येन वा क्रियते । तत्र यदि स्वत एव विद्यते, तदा समानत्वस्य स्वत एव विद्यमानत्वात्तत्र प्रवर्तमानसामान्यमकिंचित्करमेव स्यात् । अथ सामान्येन क्रियते, तन्नु

तेनैव सामान्येन क्रियते, सामान्यान्तरेण वा । तत्र यदि तेनैव, तदेतरेतराश्रयदोष । तथाहि । तत्समानत्वे सति सामान्य प्रवर्तते, सामान्ये प्रवृत्ते समानत्व जायत इतीतरेतराश्रयत्वम् । अथ सामान्यान्तरेण, तर्ह्यनवस्था । तथाहि । अपरेण सामान्येन समानत्व कर्तव्य, तदपि सामान्य समानासु व्यक्तिषु वर्तते, तासामपि समानत्वमपरेण सामान्येन विधेयमित्यनवस्था दुर्दान्तकुट्टिनीव पृष्ठतो धावमाना वर्षसहस्रेणापि नावस्थानमङ्गीकरोतीति यथा यथा विशुद्धबुद्धिभिर्विचार्यते सामान्य, तथा तथा जीर्णकुटीरकमिव विशीर्यते नावस्था वध्नाति ॥ इति स्थित शब्दप्रमाणनिराकरणम् ॥ १० ॥

[ XI ]

## [ अथ कार्यकारणभङ्ग ]

यद्युक्तिप्रमाणानधीनसत्ताक न तत्प्रेक्षावता व्यवहारावतारि, यथा व्योमारविन्दम् । युक्तिप्रमाणानधीनश्चासौ कार्यकारणभावलक्षण प्रतिबन्ध । न चायमसिद्धो हेतु । तथाहि । असौ कार्यकारणभावलक्षण प्रतिबन्धस्ताभ्या भिन्नस्वभावो वा स्यात्, अभिन्नस्वभावो वा, भिन्नस्वभावोऽपि तयोः कार्यकारणयो क्षणिकस्वभावयोर्वा वर्तेत, अक्षणिकस्वभावयोर्वा, क्षणिकस्वभावयोरपि प्रागप्रतिपन्न-कार्यकारणरूपयोर्वा यद्वा स्वभावेनैव कार्यकारणरूपयो । तत्र यद्याद्य पक्ष, तदा न युक्त सर्वत्रैव कार्यकारणरूपतु स्तम्भकुम्भाम्भोरुहादिषु पदार्थेषु भवेत्, तन्नियमकारणाभावात् । तथा तेन भिन्नस्वभावेन सवन्धेनानयो दुर्न्न-पापनोदो विधीयते, पूर्वरूपसमुत्पादो वेति विकल्पते । न तावदाद्य पक्षो ज्यायान्, विनाशहेतूनामकिञ्चित्करत्वेन विनाशस्याभावात् । तथाहि । असौ [illegible] वाना भावानाम[illegible] अविनश्वरत्व[illegible]

द्वयी गति , गत्यन्तराभावात् । यदि विनश्वरस्वभावाना भावाना, तर्हि तेषा स्वहेतुसदोहादेवोत्पन्नत्वात्किं तत्र हेतुभि कार्यम् । अथानिनश्वरस्वभावाना भावाना, इदमप्यसुन्दर, यतो ये भावा स्वहेतोरेवानिनश्वरस्वभावा समुत्पन्ना , ते पुरन्दरशतैरपि नान्यथा कर्तुं शक्यन्ते, किमङ्ग पुनर्व्यतिरिक्तसबन्धमात्रेण । नापि तेन सबन्धेनापूर्वरूपसमुत्पाद , तस्यापूर्वरूपस्य ताभ्या भिन्नहेतुकत्वादर्थान्तरप्रसङ्ग । न हि निष्पन्नेष्वनिष्पन्नो भिन्नहेतुकस्तत्स्वभावो युक्त , यतोऽयमेव हि भेदो भेदहेतुर्वा विरुद्धधर्माध्यास कारणभेदश्च । ततश्चेन्न भेदो विश्वमेकद्रव्य स्यात् । ततश्च सहोत्पादविनाशौ स्याताम् । ततश्चार्थान्तरोत्पादात्कार्यकारणरूपे वस्तुनी तदवस्थे एवेति न तयोरन्ययोगेऽपि कार्यकारणरूपतापत्ति । अथ द्वितीयपक्ष , तदा स्वभावत एव तयो कार्यकारणरूपत्वात्कथ व्यतिरिक्त सबन्धो वैयर्थ्यं नानुभवेत् । तथासौ सबन्धस्ताभ्या कार्यकारणाभ्या सहिताभ्या जन्यते, असहिताभ्या वेति भागीरथीविपुलपुलिनादवतरच्चक्रवाकयुगलमिव विकल्पद्वयममलमवतारमारचयति । तत्र यद्याद्य पक्ष कक्षीक्रियते, तदासावनुपपन्न । कार्यकारणयोः क्षणिकत्वेन चिरविनष्टत्वात्कथ कार्यकारणबुद्धिस्तन्निबन्धना स्यात् । नापि प्रत्येकजन्य , यतोऽसौ कारणेन जन्यमान सबन्ध स्वकार्यसहितो जन्यते, केवलो वेति विकल्प्यते, केवलोऽपि स्वकार्यात्पूर्वं, पश्चाद्वा । तत्र स्वकार्यसहितश्चेत्समुत्पद्यते, तदोभयोरप्यन्यतोभावात्परस्परमसबन्ध एवेति कार्यसबन्धतास्य हीयते । अथ स्वकार्यात्पूर्वं कार्ये कारणेन जन्यते, तदा कारणस्य क्षणिकत्वेन चिरविनष्टत्वात्कथ स्वकार्यकरणम् । तदभावे कारणव्यापारोऽपि न स्यादिति कारणेन कथ कार्यकारणभावलक्षण सबन्धो जन्यते ।

त्पाद्य पश्चादसौ सम्बन्धोऽनेन जन्यते, तदापि स्वकार्यकाल एव विनष्टत्वात्तदुत्तरभाविकार्यकारणसम्बन्धजननं कुतः स्यादिति कथं कार्यकारणयोरसहभावित्वात्सम्बन्धस्य द्विष्ठता । नाप्यक्षणिकरूपयोः कार्यकारणयोः प्रागप्रतिपन्नतदाधारतयोर्न पश्चादपि सम्बन्धाधारता युक्तिमती, अविचलितरूपत्वात् । किं च । असौ सम्बन्धो वस्तुरूपो वा, अवस्तुरूपो वा, वस्तुरूपोऽपि प्रत्यक्षप्रमाणपरिच्छेद्यो वा भवेत्, अनुमानसंवित्संवेद्यो वा । न तावत्प्रत्यक्षं ताभ्यां कार्यकारणाभ्यां भिन्नस्वभावं सम्बन्धं गृह्णन्निश्चीयते । नाप्यनुमानेन सम्बन्धो निर्णीयते, यतोऽनुमानं लिङ्गबलेनोदयमासादयति । न च सम्बन्धस्य किंचिल्लिङ्गमवलोक्यते । भवतु वा लिङ्गं सम्बन्धस्य, तथापि तयोः सम्बन्धः केन प्रमाणेन निर्णीयते, प्रत्यक्षेण, अनुमानेन वा । न तावत्प्रत्यक्षेण । कार्यकारणलक्षणसम्बन्धग्रहणाप्रवणेन सम्बन्धनिश्चयः, यतो द्विष्ठसम्बन्धसंवित्तिः, नैकरूपप्रवेदनात् । अनुमानेनापि लिङ्गसम्बन्धयोः सम्बन्धनिश्चयः, किं तेनैवानुमानेन, अनुमानान्तरेण वेति विकल्पद्वयम् । यदि तेनैव, तदा स्फुटमेवेतरेतराश्रयलक्षणो दोषो भवन्तमनुभाति । तथाहि । यावदनुमानं न प्रवृत्तं, न तावत्सम्बन्धावधारणं, यावत्सम्बन्धो नावधारितः, न तावदनुमानप्रवृत्तिः । अनुमानान्तरेण चेत्, अनवस्थाप्रसङ्गः । तथाहि । अनुमानं लिङ्गग्रहणपुरःसरमेव प्रवर्तते, तस्यापि लिङ्गस्यानुमानान्तरेण सम्बन्धो निर्णेयः, तदपि लिङ्गं निर्णयपूर्वकमभिधेयमित्याद्यावर्तनादनवस्था धावन्ती निर्लज्जकुट्टिनीवद्दुर्निवारा स्यात् । अथावस्तुरूपः, तर्ह्याकाशकुशेशयवत्प्रमाणाविषयत्वादविद्यमान एव । अथाभिन्नस्वभावोऽसावुच्यते, तर्हि कथं कार्यकारणाभ्यामेव कारणबुद्धिर्भवतीति सुगतमतानुसारिभिरभिधीयमानमिदं वचो भवत्पौरुष-

माभातीति न कश्चित्ताभ्यां व्यतिरिक्त सम्बन्धोऽस्तीत्युपरम्यते कार्यकारणभङ्ग ॥ ११ ॥

[ XII ]

## [ अथ सर्वगतात्मवाद: ]

अथ वैशेषिकैः सर्वगतत्वमात्मन साध्यते प्रमाणत । तथाहि । बुद्ध्यधिकरण द्रव्य विभु, नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वात् । यद्यन्नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठान, तत्तद्विभु, यथाकाशम् । तथा च बुद्ध्यधिकरण द्रव्यम् । तस्माद्विभु । न च बुद्धेर्गुणत्वासिद्धेर्हेतुविशेषणासिद्धौ[1] हेतोरसिद्धिरभिधातु शक्या, बुद्धेर्गुणत्वस्यानुमानात्सिद्धे[2] । तथाहि । गुणो बुद्धि , प्रतिषिध्यमानद्रव्यकर्मभावे सति सत्तासम्बन्धित्वात् । यो य॰ प्रतिषिध्यमानद्रव्यकर्मभावे सति सत्तासम्बन्धी स स गुण , यथा रूपादि । तथा च बुद्धि । तस्माद्गुण । न चायमसिद्धो हेतु । तथाहि । एकद्रव्या बुद्धि , सामान्यविशेषवत्त्वे सत्येकेन्द्रियप्रत्यक्षत्वात् । यद्यत्सामान्यविशेषवत्त्वे सत्येकेन्द्रियप्रत्यक्ष, तत्तदेकद्रव्य, यथा रूपादि । तथा च बुद्धि । तस्मादेकद्रव्या । न च "एकेन्द्रियप्रत्यक्षत्वात्" इत्युच्यमाने "आत्मना व्यभिचार ", तस्यैकेन्द्रियप्रत्यक्षत्वे विवादात्[3] । नापि वायुना, तत्रापि तत्प्रत्यक्षत्वस्य विवादास्पदत्वात् । तथापि रूपत्वादिना व्यभिचार , तन्निवृत्त्यर्थं "सामान्यविशेषवत्त्वे सति" इति विशेषणोपादानम् । न च रूपस्यान्त करणग्राह्यतया द्वीन्द्रियग्राह्यता चक्षुरिन्द्रियस्यैव "चक्षुषा रूप पश्यामि" इति व्यपदेशहेतोस्तत्र करणत्वसिद्धे , मनसस्त्वान्तरार्थप्रतिपत्तावेवासाधारणत्वात् । अथानेकद्रव्या बुद्धि , सामान्यविशेषवत्त्वे गुणवत्त्वे च सत्यचाक्षुषप्रत्यक्षत्वात्, शब्दवत् । तथा न कर्म

1 A बुद्धेर्गुणत्वासिद्धो हे 2 A बुद्धिगुणत्वस्या 3 A प्रत्यक्षत्वविवादात्

बुद्धिः, सयोगविभागाकारणत्वात् । यद्यत्सयोगविभागाकारण, तत्तत्कर्म न भवति, यथा रूपादि। तथा च बुद्धि । तस्मान्न कर्म । तस्मात्सिद्ध प्रतिषिध्यमानद्रव्यकर्मभावो बुद्धे । न च सत्तासवन्धित्वमसिद्धं बुद्धे, तत्र सदितिप्रत्ययोत्पादात् । न च सत्ताभिन्ना न सिद्धा तद्भेदप्रतिपादकप्रमाणसद्भावात् । तथाहि । यस्मिन्भिद्यमानेऽपि यन्न भिद्यते तत्ततोऽर्थान्तर, यथा भिद्यमाने वस्त्रादावभिद्यमानो देह । भिद्यमाने च बुद्ध्यादौ न भिद्यते सत्ता, द्रव्यादौ सर्वत्र सदितिप्रत्ययाभिधानदर्शनात्, अन्यथा तदयोगात् । सा च बुद्धिसवद्धा, ततस्तत्र विशिष्टप्रत्ययप्रतीते । तथाहि । यतो यत्र विशिष्टप्रत्यय स तत्र सनद्ध, यथा दण्डो देवदत्तेन । भवति च बुद्ध्यादौ सत्ता, इतरतत्प्रत्यय, ततस्तया सनद्धा भवति । "प्रतिषिध्यमानद्रव्यकर्मत्वात्" इत्युच्यमाने सामान्यादिना व्यभिचार, तन्निवृत्त्यर्थं "सत्तासवन्धित्वात्" इति वचनम् । "सत्तासवन्धित्वात्" इत्युच्यमाने द्रव्यकर्माभ्यामनेकान्त, तन्निवृत्त्यर्थं "प्रतिषिध्यमानद्रव्यकर्मभावे सति" इति विशेषणम्। तदेव भवति । अतोऽनुमानाद्बुद्धेर्गुणत्वसिद्धि । अस्मदाद्युपलभ्यमानत्व बुद्धेस्तदेकार्थसमवेतानन्तरज्ञानप्रत्यक्षत्वात्सिद्धम् । नित्यत्व चात्मन "अकार्यत्वात्, आकाशवत्" इत्यनुमानप्रसिद्धम् । अतो "नित्यत्वे सति", अस्मदाद्युपलभ्यमानगुणाधिष्ठानापेक्षस्यावृत्ते ॥ नापि विरुद्ध, विभुन्याकाशेऽस्य वृत्त्युपलम्भात् ॥ नापि बाधितविषय, प्रत्यक्षागमयोरात्मनि विभुत्वाप्रदर्शकयोरसमवात् ॥ नापि प्रकरणसम, प्रकरणचिन्ताप्रवर्तकस्य हेत्वन्तरस्याभावात् । भवति सकलदोषरहितादतो हेतो सर्वगतात्मसिद्धि ॥

॥ सर्वगतात्मवाद ॥ १२ ॥

---

1 A सत्तासंबंधित्वमसद्ध 2 A प्रमाणभावात् 3 B C इत्यनुमान प्रसिद्ध

तस्मादभिव्यक्तये साधनानि व्याप्रियमाणानि कथं हन्तानर्थक्यमापद्यन्त इति तदयुक्तं, व्यक्तेरस्माकमसिद्धत्वात् । तथाहि । व्यक्तिः किं स्वभावातिशयोत्पत्तिः, उत तद्विषय विज्ञानं, तदुपलम्भावरणक्षयो वा । तत्र न तावत्स्वभावविशेषोत्पत्तिः । तथाहि । असौ स्वभावातिशयो निश्चयस्वपादपृथग्भूतो वा स्यात्, पृथग्भूतो वा । तत्र यद्याद्यः[1] कल्पः, तदा तस्य निश्चयरूपत्वात्सर्वदावस्थितत्वान्नोत्पत्तिर्घटामियर्ति । अथ पृथग्भूतोऽभ्युपगम्यते, नन्वेवमपि तस्यासावितिं सम्बन्धघट्टनं दुर्निवार्यमेवासज्यमानं केन विनिवार्यते । तथाहि । असौ भवन् भवेज्जन्यजनकलक्षणः, आधाराधेयलक्षणो वा । तत्र न तावदाधाराधेयलक्षणः, परस्परमनुपकार्योपकारकयोस्तदसम्भवात् । अभ्युपगम्यते चेदुपकारः, ननु सोऽपि व्यतिरिक्त एवाभ्युपगमनीयः, ततश्चानवस्थापत्तेः सम्बन्धासिद्धिः । अथाव्यतिरिक्तः, तर्हि साधनवैयर्थ्यं निश्चयोत्पत्तावस्याप्युत्पत्तिसिद्धेः[2] । किं च । असावमूर्तोऽमूर्तस्य चाधः प्रसर्पणाभावादयुक्त एवाधारः, अधोगतिप्रतिषेधस्यैवाधारत्वयोगात्[3] । नापि जन्यजनकलक्षणः, निश्चयलक्षणस्य कारणस्य सदा सन्निहितत्वेन नित्यं कार्यजननप्रसङ्गात् । किं च । साधनप्रयोगापेक्षया निश्चयस्यातिशयोत्पादकत्वं न युक्तं, अकिंचित्कारेऽपेक्षायोगादुपकारकल्पनायां पूर्वक एव दोषोऽनवस्था च । अपि च । योऽयमतिशयः पृथग्भूतः क्रियते, स किमसन्, आहोस्वित्सन्निति । तत्रासत्पक्षे प्रागिव हेतूनामनैकान्तिकता, सत्त्वे च साधनवैयर्थ्यम् । तत्राप्यभिव्यक्ताविष्यमाणायां केयमभिव्यक्तिरित्यनवस्था । तस्माद्व्यतिरेकपक्षेऽपि सम्बन्धाभावाद्रूपातिशयोत्पत्तिर्न युक्ता । नापि तद्विषया ज्ञानोत्पत्तिर्युक्ता, नित्यत्वात्संवित्तेः । तथाहि । सत्कार्यवादिनो भवतः

---

1 A ॰च 2 A ॰त्पत्तावस्याप्युत्पत्ति सिद्धि । 3 B ॰धारत्वयोगात् ।

सनित्तिर्नित्यैवेति किं तस्या स्यादुत्पाद्य द्वितीयोपलम्भस्याभावाच्च न तद्विषयज्ञानोत्पत्तिरभिव्यक्तिर्युक्ता, आसर्गप्रलयादेका बुद्धिर्भवत्सिद्धान्ते प्रतिपादनात् । अथेदमभिधीयते "न बुद्धिस्तद्भावा तद्विषया सनित्तिरपि तर्हि मन स्वभावा", तदप्यसाधीय, अर्थान्तरत्वात् । नापि तद्विषयोपलम्भावरणक्षयलक्षणाभिव्यक्ति, पूर्वोक्तकारणद्वयादेय । तथाहि । यदिदमुपलम्भावरण तस्याक्षयत्वान्न क्षय । अथ तिरोभावलक्षण क्षय सोऽप्ययुक्त, पूर्वरूपस्याभाने तिरोभावादन्योपलम्भाभावाच्च नोपलम्भावरणमस्ति, न चासतो युक्तमावरण, वस्तुविषयत्वात्तस्य । तस्मान्न क्षयो युक्त' । किं च । आवरणमपि नित्यस्वरूपाणा न सभवत्येव । तत्कथ क्षय । नाप्यावरण केनचित्क्रियते, नित्यस्वभावत्वात्तस्यै । कि च । सत्कार्यवादपक्षे बन्धमोक्षाद्यभावप्रसङ्गो लोकव्यवहारोच्छेदप्रसङ्गश्चानिवार्य स्यात् । तथाहि । प्रधानपुरुषयो कैवल्योपलम्भे मोक्षो भवद्भिरिष्यते तत्त्वज्ञान च सर्वदावस्थितमिति मुक्ता स्यु सर्वे देहिन इति न बन्ध । मिथ्याज्ञानस्यावस्थितत्वेन सर्वदा सर्वेषा बद्धत्वात्कुतो मोक्ष । तथाहि । लोकोऽपि हिताहितार्थप्राप्तये प्रवर्तमानो हितार्थसर्वदावस्थिते कथ तत्र स स्पृह, तदभावे कथ व्यवह्रियत इति साख्याभिमत सत्कार्यवाद: सिद्धिपदवीं समश्नुते साख्यसमतसत्कार्यवादभङ्ग' ॥ १३ ॥

[ XIV ]

## [ अथ ज्ञानवाद ]

यत्प्रकाशते तज्ज्ञान, जडस्य प्रकाशायोगात् । जड हि वस्त्वव्यतिरिक्तेन प्रकाशते, व्यतिरिक्तेन वा । न तावदव्यतिरिक्तेन, यतो नाव्यतिरिक्त प्रकाश बिभ्राणा स्तम्भ-

1 A °न्त° 2 B °पलम्भाभावत्वेन 3 A नित्य स्वभावे

कुम्भादयो भावा जडा भवितुमर्हन्ति । नापि द्वितीय पक्ष , यतोऽसौ प्रकाश्यसमानकालभावी प्रकाश , भिन्न कालभावी वा, समानकालस्यापि प्रकाशकत्व किं प्रतिभा समानत्वात्, आहोस्विद्ग्रहणक्रियाकरणात्, किं वाधाराधेयत्वात्, उत तदाकारत्वात्, तज्जन्यत्वाद्वेति विकल्पा । न तावत्प्रतिभाससमानत्वात्, प्रतिभासस्य मरीचिकाज्ञानेऽपि तुल्यत्वात् । न च तत्र "वैपरीत्यं" इत्यभिधानीय, यत कस्य वैपरीत्य, ज्ञानस्य ज्ञेयस्य वेति विकल्पद्वयम् । ज्ञानस्यापि वैपरीत्य किं स्वरूपाभाव , अन्यरूपतया वा प्रकाशनम् । स्वरूपाभावोऽपि किं तस्मिन्नेव काले, कालान्तरे वा । न तावत्तस्मिन्नेव काले, तदा तस्य स्पष्टरूपतयानुभूयमानत्वात् । कालान्तरे तु स्वरूपाभावस्य सर्वविज्ञानेषु समानत्वात्सर्वेषा ज्ञानाना वैपरीत्यापत्ति' । अन्यरूपतया प्रकाशनमपि किं ज्ञान, अज्ञान वा । तावदज्ञानस्य स्वरूपसत्तापि सिध्यति । ज्ञानमपि किं तेनैव ज्ञानेन, ज्ञानान्तरेण वा । न तावत्तेनैव, यतो न "तदह मरीचिकाज्ञान सज्जलरूपतया चकासि" इति वेत्ति । नापि ज्ञानान्तरेण, तदा तस्यानुभूयमानत्वात् । ज्ञेयस्यापि वैपरीत्य किं सत्यत्वाभिमतेन ज्ञानेन ज्ञायते, वाध्येन वाधकेन वेति विकल्पा । आद्येनापि किं तद्देशादिकमागत्य प्रमेयवैपरीत्य प्रतीयते, स्वदेशव्यवस्थितेन वा । न तावत्तद्देशाद्यागमन ज्ञानस्य क्षणक्षयित्वेन सभवति । स्वदेशव्यवस्थित त्वन्यदेशव्यवस्थितस्य वार्तामपि न जानातीति कथ वैपरीत्यमवगच्छेत् । वाध्यमपि किं प्रत्यक्षमनुमान वा प्रमेयवैपरीत्यप्रत्यायकम् । न तावदध्यक्ष, तस्यातीतदेशादिग्राहकत्वा सभवात् । अथ "स्मरणेनोपनीतोऽतीतदेशादि पुरोवर्तिधर्मिदेशे क्षणत्वेन व्यवस्थितो लोचनज्ञान जनयति, तेन वैपरीत्यप्रतीति" इति चेत् तदप्यनुपपन्न, स्मरणोपनी-

सवित्तिर्नित्यैवेति किं तस्या स्यादुत्पाद्य द्वितीयोपलम्भस्याभावाच्च न तद्विषयज्ञानोत्पत्तिरभिव्यक्तिर्युक्ता, आसर्गप्रलयादेका बुद्धिर्भवत्सिद्धान्ते प्रतिपादनात् । अथेदमभिधीयते "न बुद्धिस्तद्भावा तद्विषया सवित्तिरपि तर्हि मन स्वभावा", तदप्यसाधीय, अर्थान्तरत्वात् । नापि तद्विषयोपलम्भावरणक्षयलक्षणाभिव्यक्ति, पूर्वोक्तकारणद्वयादेव । तथाहि । यदिदमुपलम्भावरण तस्याक्षयत्वान्न क्षय । अथ तिरोभावलक्षण क्षय सोऽप्ययुक्त, पूर्वरूपस्याभावे तिरोभावादन्योपलम्भाभावाच्च नोपलम्भावरणमस्ति, न चासतो युक्तमावरण, वस्तुविषयत्वात्तस्य । तस्मान्न क्षयो युक्त । किं च । आवरणमपि नित्यस्वरूपाणा न सभवत्येव । तत्कथ क्षय । नाप्यावरण केनचित्क्रियते, नित्यस्वभावत्वात्तस्य । किं च । सत्कार्यवादपक्षे बन्धमोक्षाद्यभावप्रसङ्गो लोकव्यवहारोच्छेदप्रसङ्गश्चानिवार्य स्यात् । तथाहि । प्रधानपुरुषयो कैवल्योपलम्भे मोक्षो भवद्भिरिष्यते तत्त्वज्ञान च सर्वदावस्थितमिति मुक्ता स्युः सर्वे देहिन इति न बन्ध । मिथ्याज्ञानस्यावस्थितत्वेन सर्वदा सर्वेषा बद्धत्वात्कुतो मोक्ष । तथाहि । लोकोऽपि हिताहितार्थप्राप्तये प्रवर्तमानो हितार्थसर्वदावस्थिते कथ तत्र सस्पृह, तदभावे कथ व्यवह्रियत इति साख्याभिमत सत्कार्यवादः सिद्धिपदवीं समश्नुते साख्यसमतसत्कार्यवादभङ्ग ॥ १३ ॥

[ XIV ]

## [ अथ ज्ञानवाद ]

यत्प्रकाशते तज्ज्ञान, जडस्य प्रकाशायोगात् । जड हि वस्त्वव्यतिरिक्तेन प्रकाशते, व्यतिरिक्तेन वा । न तावदव्यतिरिक्तेन, यतो नाव्यतिरिक्त प्रकाश बिभ्राणा स्तम्भ-

1 A °द्धान्त° 2 B °पलम्भाभावत्वेन 3 A नित्य समावे

कुम्भादयो भावा जडा भवितुमर्हन्ति । नापि द्वितीय पक्षः, यतोऽसौ प्रकाश्यसमानकालभावी प्रकाश, भिन्नकालभावी वा, समानकालस्यापि प्रकाशकत्वं किं प्रतिभासमानत्वात्, आहोस्विद्ग्रहणक्रियाकरणात्, किं वाधाराधेयत्वात्, उत तदाकारत्वात्, तज्जन्यत्वाद्वेति विकल्पा । न तावत्प्रतिभासमानत्वात्, प्रतिभासस्य मरीचिकाज्ञानेऽपि तुल्यत्वात् । न च तत्र "वैपरीत्य" इत्यभिधानीय, यत. कस्य वैपरीत्य, ज्ञानस्य ज्ञेयस्य वेति विकल्पद्वयम् । ज्ञानस्यापि वैपरीत्य किं स्वरूपाभाव, अन्यरूपतया वा प्रकाशनम् । स्वरूपाभावोऽपि किं तस्मिन्नेव काले, कालान्तरे वा । न तावत्तस्मिन्नेव काले, तदा तस्य स्पष्टरूपतयानुभूयमानत्वात् । कालान्तरे तु स्वरूपाभावस्य सर्वविज्ञानेषु समानत्वात्सर्वेषां ज्ञानानां वैपरीत्यापत्तिः । अन्यरूपतया प्रकाशनमपि किं ज्ञान, अज्ञान वा । तावदज्ञानस्य स्वरूपसत्तापि सिध्यति । ज्ञानमपि किं तेनैव ज्ञानेन, ज्ञानान्तरेण वा । न तावत्तेनैव, यतो न "तदह मरीचिकाज्ञान सज्जलरूपतया चकास्मि" इति वेत्ति । नापि ज्ञानान्तरेण, तदा तस्यानुभूयमानत्वात् । ज्ञेयस्यापि वैपरीत्य किं सत्यत्वाभिमतेन ज्ञानेन ज्ञायते, बाध्येन बाधकेन वेति विकल्पा । आद्येनापि किं तद्देशादिकमागत्य प्रमेयवैपरीत्य प्रतीयते, स्वदेशव्यवस्थितेन वा । न तावत्तद्देशाद्यागमन ज्ञानस्य क्षणक्षयित्वेन सभवति । स्वदेशव्यवस्थितं त्वन्य देशव्यवस्थितस्य वार्त्तामपि न जानातीति कथ वैपरीत्यमवगच्छेत् । बाध्यमपि किं प्रत्यक्षमनुमान वा प्रमेयवैपरीत्यप्रत्यायकम् । न तावदध्यक्ष, तस्यातीतदेशादिग्राहकत्वासंभवात् । अथ "स्मरणेनोपनीतोऽतीतदेशादि पुरोवर्तिधर्मिदेशे क्षणत्वेन व्यवस्थितो लोचनज्ञान जनयति, तेन वैपरीत्यप्रतीति" इति चेत्

त्रार्थस्य सत्यत्वेन जगद्दारिद्र्यप्रसङ्गात् । न चैत्र, निर्विषयत्वात्तस्य । अथ "प्रत्यक्षविषय एव स्मरणगोचर" इति चेत्, तन्न, तयोरेकविषयत्वेनैकत्वापत्ते । अथ "तदेव वस्तु परोक्षतया स्मार्तविज्ञानस्य विषय साक्षाद्रूपतया त्वध्यक्षस्य" इति ब्रूषे । इदमप्यनुपपन्न, यत किमिद परोक्षत्व वस्तु वा भवेत्, अवस्तु वा । वस्त्वपि प्रत्यक्षेणेक्षित, अनीक्षित वा । ईक्षित चेत्, तयोरेकविषयत्वापत्तिस्तदवस्था । अनीक्षित चेत्, कथमध्यक्षविषय एव स्मरणग्राह्य। अथावस्तु परोक्षत्व, एव तर्ह्यसत्त्वमेव स्यान्न वैपरीत्यम् । नाप्यनुमानेन, यतोऽनुमान प्रतिवन्धबलेनोदयति, प्रतिवन्धश्च प्रत्यक्षप्रमाणपरिच्छेद्योऽनुमानसवित्सवेद्यो वा । अध्यक्षमपि प्रतिवन्धावधारकमेकमनेक वा । एकमपि क्रमेण यौगपद्येन वा । न तावत्क्रमेण पक्षो ज्यायान्, एकग्रहणानन्तरमेव क्षणक्षयित्वेन क्षीणत्वाद्द्वितीयग्रहणाभावे कुत सवन्धावधारकत्वम् । नापि यौगपद्येन, तथा तयोरसभवात् । अनेकपक्षेऽपि लिङ्गग्राहकस्याध्यक्षस्य लिङ्गिनीतरस्य चेतरत्राप्रवृत्ते कथ द्विष्ठप्रतिवन्धप्रतीति । अनुमानेनापि प्रतिग्रहो नाभ्युपगन्तव्य , अनवस्थेतरेतराश्रयलक्षणदूषणप्रसक्ते । नापि बाधक विज्ञान ज्ञेयवैपरीत्यप्रत्यायक, यतस्तत्स्वस्यासत्त्वमेव निश्चिनोति नान्यदेशादिसवन्धिनाम् । नापि ग्रहणक्रियाकरणात्प्रकाशको बाधोऽप्यसौ ग्रहणक्रिया[1] चिद्रूपा वा निषध्ये, अचिद्रूपा चेति विकल्प्यते, चिद्रूपामप्यव्यतिरिक्ता, व्यतिरिक्ता वा । अव्यतिरिक्तपक्षे[3]ऽर्थस्य चिद्रूपत्वापत्त्या जडताहानि । व्यतिरेकपक्षे तु गृहीतिक्रिया परा गृहीतिक्रियामारचयन्ती पदार्थस्य प्रकाशिका तामन्तरेण वा । प्रथमपक्षेऽनवस्था स्फुटैव । द्वितीये तु बोधस्यापि तथात्वापत्तिरिति ।

1 B omits तद 2 B inserts वा 3 B अव्यतिरिक्ते पक्षे

अचिद्रूपापि भिन्ना वा, अभिन्ना वा । अभेदे जडार्थकर्तृत्वं विज्ञानस्यासज्यते, न चैतद्युक्त, तत्र तस्यानधिकारात् । भेदे तु तस्याजडत्वादपरया ग्रहणक्रियया असौ प्रकाशनीया साप्यपरया इत्यनवस्था तदवस्थैव । नापि तदाधेयत्वात्प्रकाशकत्वं, आधाराधेयभावस्यैव विचारभारगौरवासहिष्णुत्वात् । तथाहि । आधार किं स्थितिकरणात्, अविनाशकरणाद्वेत्यादि । नापि तदाकारत्वात्, यतस्तदाकार विज्ञानमेवानुभूयते नार्थ । अतस्तदाकारत्वबोधस्यैव व्यवस्थापकम् । अर्थव्यवस्थापकत्वे वा किं क्रमेणार्थं व्यवस्थापयति, यौगपद्येन वा । न तावत्क्रमपक्षः क्षणक्षयित्वेन सम्भवति । नापि यौगपद्य, द्वयोरननुभूयमानत्वात् । नापि तज्जन्यत्वात्प्रकाशको बोध समसमयभाविनोर्जन्यजनकभावासम्भवात् । भिन्नकालभाव्यपि बोधोऽर्थात्प्राग्वा भवेत्पश्चाद्वा । न तावत्प्राग्भावी बोधो बोधक, तदा बोधस्यैव भावात् । नापि पश्चात्, तदार्थस्य विनष्टत्वात्कस्यासौ प्रकाशको भवेत् । इत्थ समानकालभाविनो भिन्नकालस्य वा व्यतिरिक्तबोधस्य प्रकाशकस्यानुपपद्यमानत्वात् "यत्प्रकाशते तत्सुखादिवद्विज्ञानमेव" इति स्थितम् ॥ ज्ञानवादोऽसौ ॥ १४ ॥

[ XV ]

## [ अथ ज्ञानक्षणिकत्ववाद. ]

अथवा यत्प्रकाशते तज्ज्ञान, जडस्य प्रकाशायोगात् । न चायमसिद्धो हेतु , यतस्तदा हि स्यादस्य हेतोरसिद्धत्व यद्यप्रकाशरूपमपि ज्ञान स्यात्। न खलु केनापि वादिना ज्ञानस्याप्रकाशरूपमिष्ट सर्ववादिना ज्ञानस्य प्रकाशरूपत्वेनाभ्युपगमात् । नाप्यनैकान्तिक , विपक्षे प्रकाशस्याभावात् । नापि विरुद्ध ,विरुद्धसाधनाभावादेव । तथाहि । विरुद्धो जडोऽर्थः। स च स्वयं प्रकाशते, परतो वा । न तावत्स्वय, जडत्वादेव । अथ परत । तदानीं किं ज्ञानात्, अज्ञानाद्वा । यदि ज्ञानात्,

तदानीं व्यतिरिक्तात्, अव्यतिरिक्ताद्वा । यद्यव्यतिरिक्तात्, तदागतमर्थेनाज्ञानात् "ज्ञान" इत्यायात सिद्ध न समीहितम् । अथ व्यतिरिक्तात्, तदा किं तज्जन्यात् अतज्जन्याद्वा । यदि तज्जन्यात्, तदा ज्ञानरूपात्, अज्ञानरूपाद्वा । यदि ज्ञानरूपात्, तदा ज्ञानाद्वैतमेव । अथाज्ञानरूपात्, तदसगत, नाज्ञानाज्ज्ञान भवितुमर्हति, अन्यथा यदि विलक्षणादपि कारणाद्विलक्षण कार्यं समुत्पद्यते, तदा गोधूमादिभ्योऽपि शाल्यङ्कुरादय समुत्पद्येरन्, ततश्च सर्वमसमञ्जस समापनीपद्येत । न चैवम् । अथैवमभिधीयते "विलक्षणादपि गोमयाद्विलक्षणशालूकोत्पत्तिदर्शनात्तदत्राप्येव भविष्यति" तदप्ययुक्त, यतो न तत्र वैलक्षण्य कारणाभावनिबन्धनत्वेन वक्तु शक्य, अन्वयव्यतिरेकाभ्या केवलादपि गोमयाच्छालूकोत्पत्तिदर्शनात् । न च तथा केवलादर्थाज्ज्ञानकेनाप्युत्पत्तिमद्दृश्यत इष्यते वा । अथातज्जन्यात्, तदप्यचारु । अतज्जन्यादपि ज्ञानादर्थो यदि प्रकाशते, तदानीं यथा पुरोवर्तिन पदार्था प्रकाशन्ते तथा कालान्तरदेशान्तरवर्तिनोऽपि प्रकाशेरन्, अतज्जन्यत्वाविशेषात् । अथार्थमन्तरेणार्थकलाकलनविकलमपि ज्ञान न स्यात्; तदप्ययुक्त, यत स्वाशग्रहणे ह्यन्त सवेदन व्याप्रियमाणमनुभूयते । तथा बहिरप्यर्थमन्तरेण स्वप्नदशाया नानाप्रकार विज्ञान सजायमानमनुभूयत एव, न चानुभूयमानस्य वस्तुनोऽभाव शक्यते वक्तु, नीलादिज्ञाने नीलाद्याकारस्य च वेद्यमानत्वात् । तदप्यसगत, यतो वेद्यवेदकाकारविकलस्य सकलविकल्पगोचरातीतस्य निर्विकल्पसवेदनस्यैव सवेद्यमानत्वात्, ग्राह्यग्राहकाकार पुनरनादिकालालीनवासनाबलेनोत्पन्नत्वात् । तथा चोक्तम् । "सर्वमालम्बन भ्रान्त" । किं च । बहि प्रकाशस्य तद्ग्राह्यार्थविचाराक्षम-

1 H omits ज्ञानरूपात्, अज्ञानरूपाद्वा । यदि ज्ञानरूपात्, तदा

तयोपप्लुतत्वात् । तथाहि । अर्थोऽवयविरूप, अवयवरूपो वा भवेत्, गत्यन्तराभावात् । न तावदेकदेशवदवयविरूपो[1] विचार क्षमते, अवयवविरहेऽवयवित्वायोगात्, तेषु तद्वृत्तिविकल्पानुपपत्ते । तथाहि । अवयवेष्ववयवी वर्तमान किमेकदेशेन वर्तते, सामस्त्येन वा । न तावदेकदेशेन, तस्य स्वय निरवयवित्वादेव वृत्तिनिमित्तमशान्तरकल्पनेंऽशान्तरवृत्तावप्यशान्तरप्रसङ्गः, तथा चानवस्था । न च सामस्त्येन प्रत्यवयवपरिसमाप्तरूपतयावस्थितावयवित्वप्रसङ्गाद्भेदपक्षे । दोषोऽयमभेदे नास्तीति चेत्, तन्न । तत्राप्यवयवमात्रमवयविमात्र च स्यादितरेतराव्यतिरिक्तत्वात्, इतरेतरस्वरूपवत् । किं च । समस्तावयवव्यापिनोऽवयविनोऽभ्युपगमे पटादेरेकदेशे[2] रागारागकम्पाकम्पादीनि दुर्निवाराणि स्यु, एकस्य रागादिविरुद्धधर्माध्यासायोगात् । नाप्यवयवरूपोऽर्थो विचारगोचरचारी करचरणशिरोग्रादिनामवयवाना स्वावयवापेक्षयावयविरूपतया तद्रूपेणैवापास्तत्वात् । अथ परमाणूना निरशतयावयवत्वमुपपद्येतेति चेत्, तदप्ययुक्त, तेषामपि दिक्षट्कसबन्धेन षडशतापत्ते[3], अन्यथावस्थानाभावात् । ततश्चार्थविरहात्तदुन्मुखो ग्राह्याकारोऽलीक, तदलीकताया ग्राहकाकारोऽप्यलीक एव, ग्राह्याभावे ग्राहकायोगात्तदपेक्षयैव तदुपस्थिति, इत्थ च ग्राह्यग्राहकाकाराभावे ज्ञानाद्वैतमेवावशिष्यते, तस्य सर्वत्राव्यभिचरितरूपत्वात् । तस्मात्तदेव पारमार्थिकमिति स्थितम् ॥ यत्तावदुक्त "यत्प्रकाशते तज्ज्ञान" इति, तत्तावद्विचारयामः । किं स्वयमेव परनिरपेक्षमात्मान प्रकाशयति, सापेक्ष वा । तत्र यद्याद्य पक्ष कक्षीकारपूर्वीकारेण प्रतिपद्यते, तदयुक्त, स्वात्मनि क्रियाविरोधात् । न ह्यत्यन्तकुशाग्रीयबुद्धिमानपि तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्र स्पृशति, स्पृशता वा दुर्बल वादिन दृष्ट्वाभ्युपगम्यापि ब्रूमहे ।

1 A omits एकदेशवत् 2 A पटादे° 3 A °त्वापात

एकस्यैव प्रकाशकप्रकाश्यभावं कथमभ्युपगम्यते। तथाहि। प्रकाशयतीति प्रकाशकं, प्रकाश्यत इति प्रकाश्यं । न चैतयोरैकात्म्यं, विरोधव्याघ्राघ्रातत्वात् । अथ द्वितीयः पक्षे, सोऽप्यनुपपन्नः । सतोऽन्यस्य ज्ञानमज्ञानं वा । तत्र यदि तावज्ज्ञानं, तदा ज्ञानं ज्ञानान्तरवेद्यमित्यायातं, एव च स्वदर्शनव्याघातः स्वसंवेदनानभ्युपगमादिति । अथ "अज्ञानं" इति द्वितीयः पक्षः, सोऽप्यनुपपन्नः, यतस्तदपि वस्तुप्रतिषेधनादित्युच्यते, आहोस्वित् सदृशप्रतिपत्त्या वा । तत्र यदि तावदभावः, तदयुक्तं, अभावस्याकिंचित्कर- त्वादकिंचित्करत्वेऽभावरूपविरोधात् । तस्मान्नाभावापेक्ष प्रकाशकत्वम् । अथ द्वितीयः पक्षः, तत्रापि किं ज्ञानापेक्षया सदृशं ज्ञानान्तरं गृह्यते, आहोस्विज्ज्ञानवस्तुव्यतिरिक्त वस्त्वन्तरम् । तत्र यदि तावज्ज्ञानान्तरं[3], भ्रान्तं, अभ्रान्त वा । तत्र यदि भ्रान्तं, तदा तदपेक्ष प्रकाशकत्वमयुक्त, भ्रान्तत्वादेव । अथ द्वितीयः पक्षः, तदा स्वदर्शनव्याघात इति पूर्वमेवावर्तते । अथ ज्ञानव्यतिरिक्त वस्त्वन्तरस्वरूपमेव गृह्यते, तदा हेतुर्विरुद्धः, विरुद्धसाधनात् । तस्मात्स्वरूपा सिद्धो हेतुः, प्रत्यक्षानुमानबाधितत्वात् कालात्ययापदिष्ट स्यात् । तथाहि । प्रत्यक्षेण जडमनुभूयते, अनुमानेन वो भयरूपम् । यदप्युक्तं "जडं हि वस्तु व्यतिरिक्तेन प्रकाशे प्रकाशत इत्यत्राव्यतिरिक्त ज्ञानं विभ्राणा स्तम्भकुम्भा म्भोरुहादयः पदार्था न प्रतीयन्ते" इति, तदप्यसमीचीनं यतो भवतां प्रतीयन्ते, अव्यतिरेकाङ्गीकारात्, अथ मय न प्रतीयन्ते । अतः कारणादिदमुच्यते । तदासंदभ्युपगम प्रमाणं, अप्रमाणं वा । यदि प्रमाणं, तदा स्वदर्शनतिर स्कारद्वारेणास्मद्दर्शनं किं नाभ्युपगतं भवति । अथोक्तदो

1 A °प्रकाश्यकभावः 2 B द्वितीयपक्षः 3 B तत्र यदि तावत्तदा तत्रा ज्ञानान्तरं ज्ञानान्तरे

पाद्विभ्यता भवतां द्वितीयपक्षोऽभ्युपगम्यते, तदोक्तमेव दूषणमित्यत्रोपतिष्ठते। यदप्युक्त "व्यतिरिक्तज्ञानप्रकाशकत्वपक्षे प्रतिभासमानत्वात्प्रकाशकमित्यत्र मरीचिकाज्ञानेऽपि प्रकाशस्य तुल्यत्वात्" इति, तदप्यनुचित, प्रत्यनीकोपस्थापकप्रमाणेन बाध्यमानत्वात् "प्रतिभास एवालीक" इति साधनविकलो दृष्टान्त । यदप्युक्तं[3] "ज्ञानस्य वैपरीत्य ज्ञेयस्य वा" इत्यादि, तदप्यनुपपन्न, यतो ज्ञेयवैपरीत्य नाभ्युपगतमेवेत्यसदुपालम्भ एव ज्ञानस्य वैपरीत्यमुपगतमेन, तच्च ज्ञानान्तरेण बाधकेन व्यवस्थाप्यत इति न तत्पक्षभावी दोष सगतिमङ्गति। यदप्युक्त "ग्रहणक्रियाकरणादित्यचिद्रूपा व्यतिरिक्ता क्रिया" इति, तदनभ्युपगमादेव निरस्तम् । व्यतिरिक्तापि चिद्रूपा नाभ्युपगम्यते, अचिद्रूपाभ्युपगमे तत्कारणाज्ञान प्रकाशक क्रियाया, ततश्च नानवस्था, क्रियान्तरापेक्षया । तदाधेयपक्षस्तु न सभवत्येव, ज्ञानस्यात्मसमवेतत्वात् । तदाकारपक्षोऽप्यसभवान्, ज्ञानस्य निराकारत्वेनाभ्युपगमादिति तद्भ्रान्त्याच्च। यच्च तत्र दूषणमदायि यदत्राक्षणिकपक्षे न यच्छतीत्युपरम्यते ॥ १५ ॥

[ XVI ]

## [ अथ बौद्धहेतुखण्डनम् ]

यदिदमभ्यधायि शौद्धोदनशिष्यकै "स्वभावकार्यानुपलम्भलक्षणस्त्रिधैव हेतु" इति, तदयुक्तं, यतस्त्रिधैव तदैव युज्यते यदा हेत्वन्तराभाव केनापि प्रमाणेन निश्चितो भवेत्, यत प्रतियोग्यभावेऽतिनिर्णयाव्यभिचारित्वाद्भावेषु सावधारणनिर्णयस्य । यदुक्तम् ।

1 A omits 2 B C तद 3 A प्रत्यक्षकरणादि° 4 B C omit क्रिया" इति—ततश्च नानवस्था

अयमेवेति यो ह्येष भावे भवति निर्णय ।
नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥

अथोच्यते । हेत्वन्तराभाव प्रत्यक्षेणैवेष्यते । तदयुक्त, यत प्रत्यक्ष विविक्तक्षणक्षयिपरमाणुलक्षणस्वलक्षणविषयमेवाभिधीयते, न च हेत्वन्तराभावस्तथाभूतोऽभिवर्ण्यते । तथाहि । यद्यसदलक्षणो वस्त्वारमाभाव सपरिकल्पते,तदा तस्येन्द्रियसंनिकर्षाभावात्प्रत्यक्षस्य तद्विषयविरोधितेति । यदुक्तम् ।

न तावदिन्द्रियेणैषा नास्तीत्युत्पद्यते मति ।
भावांशेनैव सयोगो योग्यत्वादिन्द्रियस्य हि ॥

अथाभिधीयते । सर्वशक्तिविरहलक्षणोऽभावो ननु सोऽपि वस्तुविषयिणः प्रत्यक्षस्य विषय इत्यादातु न शक्यते । तथा "अनुमान तद्ग्राहक भविष्यति" इत्यपि न लपनीय, यतस्त्रिविधलिङ्गसमाश्रयमेव वर्ण्यते तदिति तत्र स्वभावकार्यहेतू विधिसाधकाविति न तदाश्रय सहेत्वन्तराभाव कर्तुं पारयति । अथोच्यते । यद्यपि कार्यस्वभावहेतुसमुत्थ हेत्वन्तराभाव कर्तुं न शक्नोति, तथाप्यनुपलब्धिसमुत्थ हेत्वन्तराभावसाधनाय भविष्यति । तदप्यसमीचीन, यत सापि चतुर्धा स्थूलभेदापेक्षया[1] समुपवर्ण्यते, स्वभावानुपलब्धि , कारणानुपलब्धि , व्यापकानुपलब्धि , विरुद्धविधिश्चेति । तत्र स्वभावानुपलब्धिर्हेत्वन्तराभावनिराकरणाय तदैव प्रभवति यदैकज्ञानसंसर्गिणस्तुल्ययोग्यतारूपस्य नोपलब्धिरूपा भवति न च हेत्वन्तरमत्यन्तमसत्त्वोपगत तथेति । भवतु वा स्वभावानुपलब्धिर्हेत्वन्तराभावसाधनाय, पर देशनैयत्येन सा स्यादित्यतोऽस्युपगमक्षति । अथ यद्यपि स्वभावानुपलब्धिर्हेत्वन्तराभावसाधनाय न प्रवर्तते, तथापि कारणव्यापकानुपलब्धी भवि-

1 A स्थूलापेक्षया

प्यत । तदप्ययुक्त, यत सिद्धे कार्यकारणव्याप्यव्यापकभावे भवतो न चात्यन्तयोग्यस्य हेत्वन्तराभावस्य कार्यकारणभावो व्याप्यव्यापकभावो वा समस्ति, भवतो वा कारणव्यापकानुपलब्धी तथापि देशनैयत्येन हेत्वन्तराभाव इति। न च तथाभ्युपगम्यते । अथ विरुद्धोपलब्धि , साप्यघटमानैव, यतो भवतो जायमानस्य प्रबन्धेनान्यसद्भावेऽभावाद्विरोधगति । न चात्यन्तासभविन प्रकारोऽय भवति, अभ्युपगमे वा देशनैयत्येनेव स्यादिति । तत्र च प्रागुक्तो दोष इति कथ त्रिविधैवेत्यवधारण घटा प्राञ्चति ॥ १६ ॥

[ XVII ]

## [ अथ वाच्यवाचकसबन्ध. ]

यद्येनामतिबद्धस्वभाव न तत्तस्य गमक, यथा रजोराज्यादि पदार्थो धूमध्वजस्य। अप्रतिबद्धस्वभावश्च शब्दोऽर्थेन । न चायमसिद्धो हेतु । तथाहि । असौ सबन्धो भवन् तादात्म्यलक्षण , तदुत्पत्तिलक्षणो वा, आधाराधेयलक्षण , समवायलक्षण , वाच्यवाचकलक्षणो वेति विकल्पा । तत्र न तावत्तादात्म्यलक्षण , यतस्तादात्म्ये हि शब्दार्थयो शब्दो वा स्यादर्थो वा, न द्वयम् । तथा शब्दार्थयोस्तादात्म्ये क्षुरिकामोदकादिशब्दोच्चारणे मुखपाटनपूरणप्रसङ्ग' । न च दृश्यते । नापि तदुत्पत्तिलक्षण, यत किं शब्दादर्थोत्पत्ति', अर्थाद्वा शब्दोत्पत्ति । यदि शब्दादर्थोत्पत्ति , तदा विश्वमदरिद्र स्यात्, हिरण्यशब्द समुच्चारणादेव तदुत्पत्ते । नाप्यर्थाच्छब्दोत्पत्ति, ताल्वादिकारणकलापादेव तदुत्पत्तिदर्शनात् । नाप्याधाराधेयलक्षण , तस्याप्यघटनात्, यत स आधार' स्थितिकरणात्, अविनाशकरणाद्वा । यदि स्थितिकरणात्, तदा

1 A ° त्य समोपगतस्य ■ B C omit 3 B C om.'

साधारस्थितिस्तर्त स्थाप्याद्भिन्ना क्रियते, अभिन्ना वा। यद्यभिन्ना, तदा स्थाप्यमेव कृत, तच्च स्वकारणकलापादेव सिद्धं, किं तत्राधारेण क्रियते । अथ भिन्ना, तदाधेयस्य न किंचित्कृत स्यात् । अथ तत्सबन्धिनी स्थितिर्जन्यते, ननु तत्सवन्धो जन्यजनकलक्षण ,आधाराधेयलक्षणो वा। तत्र यदि जन्यजनकलक्षण , तदाधारेण भिन्ना स्थितिर्जन्यते, आधेयस्य किमायातम् । अथाधाराधेयलक्षण , तर्ह्याधार कि स्थितिकारणादविनाशकरणाद्वेति पुनस्तदेवानुवर्तते । नाप्यविनाशकरणात्, अविनाशो हि विनश्वरस्वभावाना भावाना, अविनश्वरभावाना वा । न तावदविनश्वरस्वभावाना, यतो येऽविनश्वरस्वभावा भावास्तेपामविनश्वरत्व स्वकारणकलापादेव सिद्ध, कि तत्राधारेण क्रियते । अथ विनश्वरस्वभावा , तदप्ययुक्त, यतो ये विनश्वरस्वभावा भावास्तेपा³ विनश्वरताया पुरदरशतैरप्यन्यथाकर्तुमशक्यत्वात् । अपि नाम भावा स्वय न भवेयु । न पुनर्भार्यमाणा अपि स्व स्वभाव परित्यज्यास्व स्वभाव स्वीकुर्यु । नापि समवायलक्षण⁴, तस्याविद्यमानत्वात् । तथाहि । समवायोऽपृथग्भूताना भावानामुपवर्ण्यते । सा चापृथक्सिद्धि कि देशैकत्व कालैकत्व स्वरूपैकत्व वेति विकल्पा । न तावद्देशैकत्व, यत' पटस्य देशास्तन्तवस्तन्तूना स्वाशा । अत कथ देशैकत्वम् । अथैकाकाशदेशावस्थितत्वाद्देशैकत्वमेकदेशत्वमुच्यते, सर्वपदार्थानामेकाकाशदेशावस्थितत्वादेकत्वापत्ति । नापि कालैकत्व, तन्तुकाले पटस्याविद्यमानत्वात् । नापि स्वभावैकत्व, यत स्वभावैकत्व एकमेव वस्तु स्यादिति न कश्चित्समवाय । नापि वाच्यवाचकभाव , यतो वाच्य किमर्थस्वलक्षण, अर्थसामान्य वा द्वयी गति । न तावत्स्वलक्षण,

---

1 A omits साधार  2 B C omit the whole sentnce
3 B C omit भावास् 4 B C °स्वभावलक्षण

यतस्तस्य प्रथमे क्षणे निरीक्षण, द्वितीये तदध्यवसाय, तृतीये यावच्छब्देन वक्तुमारभ्यते तावत्तस्य क्षणक्षयित्वेन विनष्टत्वात्कथ वाच्यरूपता। नापि सामान्य, तस्याविद्यमानत्वात्। तथाहि। यत्प्रमाणगोचरचारिता नाचरति न तत्सद्व्यवहृतिपथमवतरति, यथा व्योमारविन्दम्। नाचरति च प्रमाणगोचरचारिता सामान्यम्। न चायमसिद्धो हेतु। तथाहि। तत्सामान्य प्रत्यक्षप्रमाणपरिच्छेद्य वा स्यात्, अनुमानसवित्संवेद्य वा। न तावदाद्य पक्ष, यत प्रत्यक्षस्य पुरोवर्तिव्यक्तिजन्मता,सामान्यस्य सकलत्रैलोक्योदरविवरवर्तिव्यक्तिव्याप्यस्वरूपता,तथाभूतस्य प्रत्यक्षेण कथमीक्षण, तदीक्षणेन सर्वज्ञतापत्ति। तथा तत्सामान्य व्यक्तिभ्यो भिन्न, अभिन्न वा। यद्यभिन्न, तदा किं तासु व्यक्तिषूत्पद्यमानासूत्पद्यते व्यक्त्यन्तराद्वा गच्छति व्यक्तिशून्य एव वा देशेऽवतिष्ठते। तथा चोक्तम्।

व्यक्तिजन्मन्यजाता चेदागता नाश्रयान्तरात्।
तच्छून्ये न स्थिता देशे सा तया सगता कथम् ॥ १ ॥
व्यक्तिनाशे न चेन्नष्टा गता व्यक्त्यन्तर न च।
तच्छून्ये न स्थिता देशे सा जाति क्वेति कथ्यताम्॥२॥

तत्र यदि व्यक्त्या सह जन्मेष्यते, तदा नित्यत्वाभ्युपगमक्षति। द्वितीयपक्षे तु सक्रियत्वेन निष्क्रियत्वाभ्युपगमो विरुध्यते। तृतीयपक्षस्तु, सदैव व्यक्त्याधारत्वाभ्युपगमान्न सभवति। तथा विनाशविकल्पा अप्यनेनैव युक्तिकलापेन निरस्तावतारा द्रष्टव्या। अथ भिन्न सामान्यमनुगताकार वा स्यात्, व्यावृत्ताकार वा। यदि व्यावृत्ताकार, तदा व्यक्तिरूपस्येव व्यावृत्तत्वाद्व्यक्तिस्वभावतैव तस्य न सामान्यरूपता। अथानुगताकार, तदा सोऽनुगम स्वरूपे, पररूपे वा। न तावत्स्वरूप, तत्रानुगमाभावात्। न हि सुशिक्षितोऽपि वटु स्व स्कन्धमधिरोढु समर्थ।

नापि पररूपे, यत पररूपानुगम किं तादात्म्य, तत्समवायो वा । न तावत्तादात्म्य, व्यतिरेकाङ्गीकारात् । नापि समवायः, सामान्यस्य समवायादत्यन्तव्यतिरिक्तत्वे नाभ्युपगमात् । अथ प्रमाणान्तर सामान्यसाधक विद्यते । ततो वाच्यरूपता भविष्यति । तथाहि । यदबाधितबोधगोचरचारि तत्सर्वमस्ति, यथा स्तम्भकुम्भादिकद्रव्यकम् । अबाधितबोधगोचरचारि च सामान्यमिति, अस्य सामान्यसाधकस्य हेतोर्विद्यमानत्वात्कथं नास्ति सामान्यम्। इदमप्ययुक्त, अस्य हेतोर्वृत्त्यादिविकल्पैर्बाध्यमानत्वात् । तथाहि । तत्सामान्य तासु व्यक्तिष्वेकदेशेन वा वर्तते, सामस्त्येन वा, एकदेशेनापि किं येनैवांशेनैकस्या व्यक्तौ वर्तते तेनैव द्वितीयस्यामपि, अंशान्तरेण वा । यदि तेनैव, तदेकांशेन सर्वव्यक्तीना व्याप्तत्वात्पिण्डरूपता । अथांशान्तरेण, तदा खण्डीभूतत्वात्सामान्यस्य नि सामान्यापत्ति । अथ सामस्त्येन, तदेकस्यामेव व्यक्तौ परिनिष्ठितत्वाद्व्यक्त्यन्तराणि सामान्यशून्यानि प्राप्नुवन्ति । तथा तत्सामान्यमसमानरूपासु व्यक्तिषु वर्तते, समानरूपासु वा । यद्यसमानरूपासु, तर्हि गोत्वसामान्य यथा गोषु वर्तते, तथा महिष्यादिष्वपि वर्तेत, विशेषाभावात् । अथ समानरूपासु, तदा किं तासा सामान्यरूपता स्वरूपेण, सामान्येन वा । यदि स्वरूपेण, तदा सामान्येन किं कर्तव्यम् । अथ सामान्येन क्रियते, किं तेनैव, सामान्यान्तरेण वा । यदि तेनैव, तदा स्फुट एवेतरेतराश्रयदोष । अथ सामान्यान्तरेण, तदा तदपि तासु समानरूपास्वसमानरूपासु वेत्याद्यनुवर्तनयानवस्थागच्छतीति तद्भयात्तासामसमानरूपता स्वरू-

1 A न तावत्तादात्म्यात्व्यतिरे का॰ 2 A omits तदा स्फुट एवेतरेतराश्रयदोष । अथ सामान्यान्तरेण

वेणाभ्युपगन्तव्या, तस्या स्वरूपसिद्धाया सामान्येन किं कर्तव्यमिति प्रतिबन्धासिद्धेर्नासिद्धत्वम्। नाप्यनैकान्तिकत्व, यतो यदि प्रतिबन्धमन्तरेणापि गमकत्व भवेत, तदा स्यादनैकान्तिकत्वम्। तच्च न, अतिप्रसङ्गात्। तथाहि। प्रतिबन्धमन्तरेणापि गमकत्व यत्किंचिद्यत कुतश्चिद्गम्यते। न चैवम्। तत्रानैकान्तिकत्वम्। नापि विरुद्धत्व, सपक्ष एव भावात्॥ स्वपक्षे प्रतिष्ठा कुर्वद्भि सद्भिरस्माभिरिदमुदीर्यते। यत्तावत् "शब्दो ऽर्थस्य गमको न भवति" इति साध्ये "यद्येन" इत्यनुमानमुपन्यस्त, तत्राप्रतिबद्धस्वभावत्वलक्षणो हेतुरसिद्ध। तथाहि। शब्दोऽर्थप्रणयनार्थं प्रयुज्यते, उच्चारिताच्च शब्दादर्थप्रतीतिरुपलभ्यते। सा च सबन्धनिबन्धना वक्तव्या। अन्यथा, यत कुतश्चिच्छब्दाद्यस्य कस्यचिदर्थस्य प्रतीति स्यात्, न नियतान्नियतस्य, तस्मात्संबन्धोऽङ्गीकर्तव्य, स च वाच्यवाचकभावलक्षण एव, सबन्धत्रयस्य यथोक्तदूषणाघातत्वात्। यच्चाभिहित "अर्थस्वलक्षण क्षणिकत्वाद्वाच्य न सभवति" इति, तदसगत, सहेतुकाना घटादीना मुद्गरादिव्यापारानन्तर विनाशोपलब्धे नियतकालावस्थायित्वस्य व्यवस्थापितत्वात्। इतरथोत्पादानन्तरमेव विनाशे जगच्छून्य स्यात्, निर्हेतुकाना च व्योमादीना सर्वदाविद्यमानत्वात्स्वलक्षणस्य वाच्यत्वम्। यच्चोक्त "सामान्य प्रमाणगोचरातिक्रान्तत्वाद्वाच्य न सभवति" इति, तन्न, यत शब्दोल्लेखशून्येऽपि निर्विकल्पके ऽनुगत रूप प्रतिभासते कथम्। अन्यथा दाक्षिणात्यस्याविज्ञातेऽपि वाचक उष्ट्रपरपरा पश्यतोऽनुगतरूपप्रतिपत्ति स्यात्। तथा सविकल्पेऽपि सामान्य प्रतिभासते। तथाहि। "अनयोः सादृश्यमेषा सारूप्य," "सोऽनेन सदृश" इत्यादि सविकल्पक ज्ञानमप्रतिपन्नसामान्यस्य नोपपद्यते,

1 A सपक्षप्रति-

"अप्रतिपन्नघटस्य घटोऽय" इति ज्ञानवत् । तस्मात्प्रत्यक्षेण सामान्यं प्रतीयते । अनुमानतोऽपि, तत्पूर्वकत्वात्तस्य । न चेद ज्ञान निर्हेतुक, कादाचित्कत्वात् । नापि तत्पिण्डमात्रनिवन्धन, पिण्डाना व्यावृत्तत्वात् । यदि चेद पिण्डमात्रनिवन्धन स्यात्, तदानीं कर्कादिष्वपि गौर्गौरित्युल्लेखेनोत्पद्यते, पिण्डरूपतायास्तेष्वप्यविशेषात् । न च "वाहदोहाद्यर्थक्रियानिवन्धनोऽय" इति वाच्य, तदभावेऽपि वत्सादौ गोवुद्धिप्रवृत्ते ,महिष्यादौ तत्सद्भावेऽपि[1] चाप्रवृत्ते । न च वाधितोऽय प्रत्यय , सर्वत्र सर्वप्रमातृणामनुगताकारस्योपलब्धे । नापि दुष्टकारणप्रभव , काचकामलाद्यशेषचाक्षुषदोषानुपप्लुतविशालपक्ष्मलधवललोललोचनोत्पलयुगलशालिनामप्यनुस्यूताकारस्य प्रभासनात् । तस्मादनुगतप्रत्ययनिमित्तत्वात्सामान्यस्य सद्भाव सिद्ध , तत्सिद्धौ च सामान्यस्वलक्षणयोर्वाच्यत्व शब्दस्य च वाचकत्वमिति स्फुट एव शब्दार्थयोर्वाच्यवाचकलक्षणसवन्धो[2] जाघटीति कथ नासिद्धत्व हेतोरिति ॥ १७ ॥

[ XVIII ]

## [ अथ वाच्यवाचकसवन्धखण्डनम् ]

अत्रोत्तरयाम । यत्तावदुक्त "सहेतुकविनाशत्वाद्घटादीना कियत्कालानस्थायित्व," तदसमीचीन, विनाशहेतोरपि विचार्यमाणस्यासभवात् । तथाहि । विनाशहेतुभिर्विनाशो विधीयमानो ऽविनश्वरस्वभावाना भावाना विधीयते, विनश्वरस्वभावाना वेति भागीरथीविपुलपुलिनान्तरचक्रवाकद्वयमिव विकल्पयुगलमवतारमाचरयति[3] । तत्र न तावदविनश्वरस्वभावाना, यतो येऽविनश्वरस्वभावास्तेषा विनश्वरस्वभावत्वस्य पुरदरशतैरपि कर्तुमशक्य-

1 A omits तत् 2 A वा॰ 3 A रमाचयति

त्वात् । अपि नाम भावा स्वय न भवेयु । न पुनर्मार्यमाणा अपि स्व स्वभाव परित्यज्य स्वभावान्तरमुररीकुर्यु । नापि विनश्वरस्वभावाना, यतो ये विनश्वरस्वभावास्तेषा स्वहेतुकलापादेव तथाभूताना समुद्भूतत्वाद्विनाशहेतुभि कि कर्तव्यम् । तस्मान्न सहेतुकविनाशनलातिक्रियत्कालावस्थायित्व, भावाना क्षणिकत्वप्रसाधकानुमानसद्भावात् । तथाहि । यद्यथा प्रतिभासते तत्तथैवाङ्गीकर्तव्य', यथा निर्दोषनयनप्रभवदर्शने प्रतिभासमान नील नीलरूपतया चकास्ति क्षणिकत्वाध्यासिता सर्वार्थमात्रा इत्यमुतोऽनुमानाद्भावाना क्षणिकत्व, तस्मिंश्च क्षणिकत्वे न स्वलक्षणस्य वाच्यत्व नापि सामान्यस्य, तस्याविद्यमानत्वात् । यद्यपि च प्रत्यक्षादिप्रमाणेन तत्सत्त्व व्यवस्थापित, तथापि तस्य वृत्त्यादिविकल्पैर्बाध्यमानत्वादिति नास्ति शब्दार्थयोर्वाच्यवाचकलक्षण सबन्ध इति स्थितम् ॥ १८ ॥

[ XIX ]

## [ अथ सामान्यनिराकरणम् ]

इह हि नैयायिकमीमासकादयो नित्य व्यापक गोत्वादिसामान्यमुपगच्छन्ति । तच्च न प्रेक्षाक्षुण्णमानसैर्विचार्यमाण सत्तामासादयति । तथाहि । तदभ्युपगम्यमान सप्रमाणकमभ्युपगम्यते, नि प्रमाणक वा । यदि नि प्रमाणकमिति पक्ष , स न युक्त , प्रमाणमन्तरेण व्यवस्थानाभावात्, अन्यथा खरविषाणवन्ध्यास्तनन्धयादयोऽपि प्रव्यवहृतिपथमवतरेयु । अथ "सप्रमाणकं" इति पक्ष, सोऽपि न युक्त , यतस्तद्ग्राहक प्रमाण प्रत्यक्ष वा भवेद्, अनुमान वा, प्रत्यक्षमपि निर्विकल्पक, सविकल्पक वा । तत्र यदि "निर्विकल्पक" इति पक्ष , स न सगत शबलत्वादिव्यतिरेकेण सामान्यस्यानुगताकारस्यापरस्याप्रतिभासनात्[1] प्रति-

1 A. omits तस्मान्न सहेतुकविनाश॰ ... तत्तथैवाङ्गीकर्तव्य; A.om. ts अपरस्य

भासाभावात् । न ह्यध्यक्षव्यापारेण शावलेयादिषु व्यवस्थित कण्ठे गुण इव भिन्नमनुगताकार सामान्य केनचिल्लक्ष्यते । अथ "सविकल्पक तद्ग्राहक" इति पक्ष , सोऽप्ययुक्त । गौर्गौरिति विकल्पज्ञानेनापि [illegible] एव समानाकारा शावलेयादयो बहिर्व्यवस्थिता अवसीयन्ते । अन्तश्च शब्दोल्लेखो न पुनस्तद्भिन्नमपर गोत्वम् । अथ "अनुमान" इति पक्ष कक्षीक्रियते, सोऽपि न चारुत्वमवलम्बते, यतस्तद्ग्राहकमनुमानमभ्युपगम्यमान किंस्वरूपमिति वक्तव्यम् । अथ किमत्रोच्यते । विद्यत एव सकललोकप्रसिद्धमनुमान तद्ग्राहकम् । तथाहि । व्यावृत्तेषु खण्डमुण्डशावलेयादिष्वनुगताकारस्तद्व्यतिरिक्तानुगतनिमित्तनिबन्धनो व्यावृत्तेष्वनुगताकारप्रत्ययत्वात् । यो यो व्यावृत्तेष्वनुगताकारप्रत्यय स स तद्व्यतिरिक्तानुगतनिबन्धन , यथा चर्मचीरकम्बलेषु नीलमिति प्रत्यय । तथा चाय शावलेयादिषु गौर्गौरिति प्रत्यय । तस्मात्तद्व्यतिरिक्तानुगतनिमित्तनिबन्धने इति नैतत्साधीय , सामान्यस्यानुगतप्रत्ययहेतुत्वेन प्रमाणतो निर्णयाभावात् । तथाहि । अनुगताकारस्य ज्ञानस्य निर्निमित्तस्यासभवात्केनचिन्निमित्तेन भाव्यमित्येतावन्मात्र तिष्ठति । तच्च सामान्यमन्यद्वा न निश्चेतुं शक्यते । किं च । कार्यान्वयव्यतिरेकाकाराभ्या कारणस्यावधारणं, पिण्डाना च विशेषप्रत्ययोत्पत्तौ ताभ्या सामर्थ्य सिद्धम् । ततोऽनुगतप्रत्ययेऽपि तेषामेव सामर्थ्यपरिकल्पन, न सामान्यस्य, तस्य क्वचिदपि सामर्थ्यानवधारणात् । तथाहि । पिण्डसद्भावेऽनुगताकारमुपलभ्यते तदभावे नेति चरमध्यक्षप्रत्ययावसायाना तेषामेव तन्निमित्तता कल्पनीया । न चैतद्वक्तव्य "पिण्डानामविशिष्टत्वात्प्रतिनियमो न स्यादनुगतप्रत्ययोत्पत्तौ" इति, यतो यथा सदादिरूपतयाविशेषेऽपि तन्तू

---

1 A omits तद् 2 B omits चाकार

नामेव घटजन्मनि हेतुकत्व न कपालादीना, तथा शाबलेयादीनामेव गोत्वारिति ज्ञानोत्पादनसामर्थ्य भविष्यति कयाचिद्युक्त्या न कर्कादीनाम्। यथा यथा गुडूच्यादेरेव ज्वरादिशमने सामर्थ्य प्रतीयते न दध्यादेर्वस्तुरूपतयाविशेषेऽपि, तथा प्रकृतेऽपि भविष्यतीति न पर्यनुयोगो युक्त । किं च। सामान्य मूर्तमभ्युपगम्यते, अमूर्त वा। यद्यमूर्तं, न सामान्य स्यात्, रूपवत्। अथ मूर्तं, तथापि न सामान्य, घटवत्। तथा किं सांशमभ्युपगम्यते, निरंश वा। यद्यनंश, न तर्हि सामान्य, अनंशत्वात्, परमाणुवत्। अथ सांश, तथापि न सामान्य, घटवत्। किं च। पिण्डेभ्यो भिन्न वा स्यात्, अभिन्न वा, भिन्नाभिन्न वा। न तावद्भिन्नाभिन्न, विरोधात्। अथ "केनाप्यंशेन भिन्न केनाप्यभिन्न" इति, तदपि न युक्त, सामान्यस्य निरंशत्वात्। नाप्यभिन्न, पिण्डाना नानात्वे तस्यापि नानात्वापत्ते, तदेकत्वे वा तेषामेकरूपताप्रसक्ते । नापि भिन्न, असामान्यरूपताप्रसङ्गात्, दण्डादिवत् । अथानेकसम्बन्धात्सामान्यमभिधीयते, तदपि न युक्त, सख्याकार्यद्रव्यादेरपि सामान्यरूपताप्रसङ्गात् । अथानुस्यूताकारतया प्रतीयमान सामान्य, नेतरदित्यभिधीयते, तदप्यसगत, यत किमात्मरूपानुस्यूत, पररूपानुस्यूत वा। न तावदात्मरूपानुस्यूत, आत्मन्यनुगमाभावात् । अथ पररूपानुस्यूत, तदपि न चारु, यत पररूपानुस्यूतता किं तादात्म्य, तत्समवायो वा। तद्यदि तादात्म्य, तदा पूर्वो दोष । अथ तत्समवाय, सोऽपि न सगत, समवायस्याभावात्। भवतु वा सर्वव्यापि गोत्व, यथा गोपिण्डेषु सम्बन्धयति, तथा कर्कादिपिण्डेषु किं न सम्बन्धयति विशे-

---

1 A गुडूच्यादेरेव B गुडूच्यादेरेव 2 A omits पररूपानुस्यूत वा
3 A पूर्वदोष

[ XX ]

## [ अथापशब्दनिराकरणम् ]

येऽप्यमी शाब्दिका अपशब्दजिघृक्षवो लब्धलक्ष्या समाचक्षीरन् "अपशब्दस्त्वया कृत "इति, तदेतद्विचारयाम । किं ध्वनिव्यतिरिक्तोऽयमपशब्द , आहोस्विद्ध्वनिरेवापशब्दः । यदि तावत् "ध्वनिव्यतिरिक्तोऽयमपशब्द " इत्यय पक्ष कक्षीक्रियते, एव सति यावन्तोऽप्यमी ध्वनिव्यतिरिक्ता रूपादय सर्व एव ते ध्वनिव्यतिरिक्तत्वादपशब्दतामश्नुवीरन्, आगमविरोधश्चापद्यते भवता, यत स्फोटोऽपि ध्वनिव्यतिरिक्त एवेष्यते, तस्यापशब्दता प्राप्नुयात् । अथ "ध्वनिरेवायमपशब्द "इति प्रतिज्ञा, असावपि निष्कृतनासाभरणेन नायिका न शोभामादधाति, यतो ध्वनि शब्द इत्यनर्थान्तर, लौकिकप्रयोगदर्शनात् । तथाहि । ध्वनिं कुर्वन्नुच्यते शब्द कुरु मापशब्द कार्षीरिति तस्मादसत्कल्पनैवामौ त्वयापशब्द कृत इति । किं च । श्रोत्रेन्द्रियज्ञानावसेयो वा भवेदपशब्द , चक्षुर्विज्ञानसमधिगम्यो वा । तत्र यद्याद्य पक्ष , तदा न साधिमानमास्कन्दति, श्रोत्रेन्द्रियज्ञानग्राह्यत्वात्, साधुशब्दवत् । अथ द्वितीय कल्प , तदापशब्दव्यपदेशतो[1] नापद्यते, चाक्षुषत्वात्, रूपादिवत् । अथैवमभिदध्युः "लक्षणानुपपन्नोऽपशब्द ," एतदपि स्ववधाय कृत्योपस्थान यतो यदि लक्षणाभिधानेन जेगीयमाना शब्दास्त एवोच्यन्ते, तत शब्दाना नित्यता प्रलीयते कथम् । यदि नित्या शब्दा किं लक्षणेन । अथ लक्षण, न तर्हि नित्या । अथैवमामानन्ति नैयायिका । "अर्थप्रतिपादका साधव इत्यपशब्देन च नासावर्थो गम्यत इत्येवमपि न दोषः । योऽपि "गौ " इत्याह सोऽपि लाङ्गलखुरककुदविषाणादिमन्त गोपिण्ड प्रत्याययति । योऽपि "गावि" इत्याह, सोऽपि

1 A व्यपदेशतो

तमर्थं, न च "गवि" इत्युक्ते वडवा प्रतीयते करेणुर्वा" । एतत्त्वयुक्तम् । "अर्थप्रतिपादका साधव" इति समर्थं, न च "गवि" इत्युक्ते वडवा प्रतीयते" इति स्थितमेतत् "नास्त्यपशब्द," तदुत्पादककारणाभावात् कार्यस्याप्यभाव इति निश्चीयते । अथैवमाहुर्वैयाकरणा । यान्येवापशब्दस्योत्पादककारणानि, तान्येव साधुशब्दस्यापि । अयमपि परिहारसबन्धोऽसबन्धयतामात्मन प्रदर्शयति । किं कारणानि । यतो भिन्नानि कार्याणि भिन्नेभ्यो कारणेभ्यो दृश्यन्ते । तस्माच्छब्दापशब्दयोरेकं कारण नोपपद्यत इति स्थितमेतत्, अन्यथा ह्येकस्माच्छालिबीजात्सर्वसस्योत्पत्ति स्यात् । न चैतद्दृष्टमिष्ट वा । तस्मादयुक्तमुक्त "यान्येव शब्दस्योत्पादककारणानि तान्येवापशब्दस्यापि" इति । अथ ते व्याकरणविदो वदन्ति । "योऽयमपशब्दनिराकरणोपायोपन्यासो भवद्भिरङ्गीकृत, नानेनायमपशब्दो निराकर्तुं शक्यते । किं कारणम् । यत शब्द एवावस्थान्तरगतोऽपशब्द इत्युच्यते यथा वत्स एवावस्थान्तरगतो वृषभादिव्यपदेशमापद्यते" । अयमप्यसार, यतस्ते वैयाकरणा नित्या शब्दा नित्योऽर्थो नित्य सबन्ध इत्याचक्षते नित्येषु नाम शब्देषु कूटस्थैरविगलद्भिर्वर्णैर्भवितव्यम् । कथमवस्थान्तरप्राप्त्या शब्दोऽभिसबध्यत इत्याह दुर्मेधसा धौरेय इत्यपशब्दनिराकरणम् ॥ २० ॥

[ XXI ]

## [ अथ पचतिवाद. ]

इह हि प्रथम तावल्लक्षणे विचारयाम, तदुत्तरकाल प्रमाणे । यो हि तल्लक्षण न वेत्ति कथ तस्य तर्काधिकार । तत्र लक्षणमेव विचार्यते । लक्षण चाख्यातम् । आख्यात च क्रियाप्रधानम् । क्रिया च "पचति" इत्यादिरूपा । तत्र

1 A omits 2 A C omit प्रधानम्

“भवता पचति” इत्यादिरूप न शक्यते साधयितुम् । तथाहि । “डुपचप् पाके” इति धातु । तत्रानुबन्धयो प्रयोजन वक्तव्यम् । भवतु नाम किमपि प्रयोजन दुर्बल वादिन दृष्टाभ्युपगमवाद प्रवर्तते किं चान्यदपि प्रेर्यते यथा पचते परस्मैपदानामेकवचन कस्मिन्नर्थे प्रवर्तते । अथेत्थमाचक्षीथा कर्तरि ननु कर्तापि विचारणीय सामान्यो विशिष्टो वा । तत्र विशिष्टे कर्तरि परस्मैपद केनापि सूत्रेणाप्रतिपादितम् । सामान्येन च परस्मैपद दृश्यते, यथा “पचति देवदत्त” । तत्रापि “पचति देवदत्तेन” इति स्यात्, कथ पचति देवदत्त । यथा कृतपूर्वी कट देवदत्त पुत्रीयति माणवकमित्यत्र विशेषकर्मद्योतिका द्वितीया प्रवर्तते, तथात्रापि विशेषकर्तृद्योतिका तृतीया प्रवर्तमाना दुर्निवारा स्यात् । किं च । क्रियाभावो धातु । क्रिया च साधनायत्ता, साधन च प्रत्ययवाच्यम् । ततो न यावत्प्रत्यय समुत्पन्नो न तावद्धातुत्व न यावद्धातुत्व समुत्पन्न न तावत्प्रत्यय समुत्पद्यत इतीतरेतराश्रयदूषण समापनीपद्यते । किं च । क्रिया प्रत्यक्षेण गृह्यते, अनुमानेन वा । तत्र प्रत्यक्ष पञ्चधा स्पर्शनरसनदर्शनघ्राणश्रोत्रेभ्य समुत्पन्नम् । तत्र न तावत्स्पर्शनेन क्रिया गृह्यते । कथमिति चेत्, तस्या स्पर्शरूपापत्ते, तुल्यादिवत् । न च क्रिया तुलीभवितुमर्हति । नापि रसनेन्द्रियेणोपादीयते, तस्या स्निग्धदुग्धादिरूपापत्ते । न च दुग्धादिरूपा क्रिया क्वापि दृश्यते । नापि घ्राणेन्द्रियेणाङ्गीक्रियते, तस्या गन्धरूपापत्तेर्मृगमदघनसारादिवत्, न च मृगमदादिरूपता युक्ता । न च चक्षुषा गृह्यते, तस्याश्चित्राङ्गनादिरूपापत्ते, न च चित्राङ्गनादिरूपता समीचीना । न च श्रवणाभ्यामभ्युपगम्यते, तस्या वेणुवीणारवरूपतापत्ते, न च वेणुवीणादिरवरूपा क्रिया । तदेव सर्वेष्वपीन्द्रियादिष्वर्थेषु क्रियानुभावाभावान्न प्रत्यक्षेण

गृह्यते क्रिया । नाप्यनुमानेन । अनुमान हि लिङ्गलिङ्गिनोरविनाभावनिश्चयेन प्रवर्तते, यथा धूमाद्यनुमानम् । न च क्रियाया धूमवल्लिङ्गमुपलभ्याम, तस्या अमूर्तत्वात् । अत कथ गृह्यते क्रियेति पूर्वपक्ष । अथोत्तर । तत्र यदुक्त "अनुबन्धयो किं प्रयोजन" अनुबन्धप्रयोजनममुत्र धातौ तत्रापदुच्यते डुकारो ड्वनुबन्धात्त्रिमक्, तेन निर्वृत इति विशेषार्थ । तेन पक्त्रिममिति सिद्धम् । षकारोऽपि पानुबन्धभिदादिभ्योऽजित्यत्र विशेषप्रयोजनार्थ , तेन पचेति सिद्धम् । यदप्युक्त "विशिष्टकर्तृत्वद्योतिका तृतीया प्राप्नोति" तदपि न युक्त, समानाधिकरणे ऽस्य न्यायस्य वैयाकरणैरनभ्युपगमात् । यथा कृत कटो विशेषकर्मद्योतिका द्वितीया न प्रवर्तते, तथा विशेषकर्तृत्वद्योतिका तृतीया न प्राप्नोति । यदप्युक्त 'क्रियाभावो धातु क्रिया च साधनायत्ता' इत्यादि, तदपि न युक्तमवभासते, "पचति" "धावति' इत्यादिव्यपोद्धारद्वारेण क्रियाया अङ्गीकरणात्[1] । यदप्युक्त "पञ्चविधेन प्रत्यक्षेणानुमानेन ॥ न गृह्यते" तदप्यनुपपन्न, तस्या अनुमानेन ग्रहणात् । तथा चोक्त
नित्य क्रियानुमेया द्रव्यविकारेण भवति धात्वर्थ ।
कारकसाध्या द्वेधा सकर्मिकाकर्मिका चेति
पचतिवाद ॥ २३ ॥

---

जैन साख्य तथा बौद्धमौलूक्य च तथापरम् ।
लौकायित च मीमास षडेता दृष्टय स्मृता ॥ १ ॥
रत्नत्रय जिनो देवो द्वे माने तत्त्वसप्तकम् ।
नित्यानित्य जगत्सर्वमिति जैनेन्द्रदर्शनम् ॥ २ ॥
पञ्चविंशतितत्त्वानि नित्य सर्वगतोऽक्रिय ।
आत्मा भोगी तथामूर्त साख्याना मतमीदृशम् ॥ ३ ॥

---

1 A omits from यदप्युक्त down to अङ्गीकरणात्

क्षणिकत्व ज्ञानवादो शून्यवादस्तथा पर ।
द्वादशायतनानीति तृतीय बौद्धदर्शनम् ॥ ४ ॥
ईश्वरेण कृत सर्व षट् पदार्था शिवोदिता ।
चत्वार्येव प्रमाणानि नैयायिकमत त्वद ॥ ५ ॥
नास्ति जीवो न वा देवो न मोक्षो न पुनर्भव ।
न पुण्यपापे सद्भूते भूतमात्रमिद जगत् ॥ ६ ॥
अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते
प्रत्यक्षो न हि बाह्यवस्तुनिसर सौत्रान्तिकैराश्रित ।
योगाचारमतानुसारिमतिना साकारबुद्धि पर
मन्यन्ते बत मध्यमाः कृतधिय स्वच्छा परा सविदम्॥७॥
अपौरुषेय वेदस्य प्रामाण्य षट्प्रमाणता ।
सर्वज्ञाभाव इत्येतन्मीमासकमत मतम् ॥ ८ ॥
प्रत्यक्षमनुमान च शाब्द चोपमया सह ।
अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिने ॥ ९ ॥

॥ इति श्रीचन्द्रप्रभसूरिभिर्विरचित
प्रमेयरत्नकोश सपूर्ण ॥

गृह्यते क्रिया । नाप्यनुमानेन । अनुमानं हि लिङ्गलिङ्गिनोरविनाभावनिश्चयेन प्रवर्तते, यथा धूमाद्यनुमानम् । न च क्रियाया धूमवल्लिङ्गमुपलभ्यामः, तस्या अमूर्तत्वात् । अत कथं गृह्यते क्रियेति पूर्वपक्ष । अथोत्तर । तत्र यदुक्त "अनुबन्धयो किं प्रयोजन" अनुबन्धप्रयोजनममुत्र धातौ तत्तावदुच्यते डुकारो ड्वनुबन्धाद्धिमप्, तेन निर्वृत इति विशेषार्थ । तेन पक्त्रिममिति सिद्धम् । षकारोऽपि षानुबन्धभिदादिभ्योऽङित्यत्र विशेषप्रयोजनार्थ , तेन पचेति सिद्धम् । यदप्युक्त "विशिष्टकर्तृत्वद्योतिका तृतीया प्राप्नोति" तदपि न युक्त, समानाधिकरणेऽस्य न्यायस्य वैयाकरणैरनभ्युपगमात् । यथा कृत कटो विशेषकर्मद्योतिका द्वितीया न प्रवर्तते, तथा विशेषकर्तृत्वद्योतिका तृतीया न प्राप्नोति । यदप्युक्त "क्रियाभावो धातु क्रिया च साधनायत्ता" इत्यादि, तदपि न युक्तमवभासते, "पचति" "धावति" इत्यादिव्यपदेशद्वारेण क्रियाया अङ्गीकरणात्[1] । यदप्युक्त "पञ्चविधेन प्रत्यक्षेणानुमानेन च न गृह्यते" तदप्यनुपपन्न, तस्या अनुमानेन ग्रहणात् । तथा चोक्त

नित्य क्रियानुमेया द्रव्यविकारेण भवति धात्वर्थः ।
कारकमाध्या द्वेधा सकर्मिकाकर्मिका चेति
पचतिवाद ॥ २३ ॥

---

जैनं साख्य तथा बौद्धमौलूक्य च तथापरम् ।
लौकायित च मीमास षडेता दृष्टय स्मृता ॥ १ ॥
रत्नत्रयं जिनो देवो द्वे माने तत्त्वसप्तकम् ।
नित्यानित्य जगत्सर्वमिति जैनेन्द्रदर्शनम् ॥ २ ॥
पञ्चविंशतितत्त्वानि नित्य सर्वगतोऽक्रिय ।
आत्मा भोगी तथामूर्त साख्याना मतमीदृशम् ॥ ३ ॥

---

1 A omits from यदप्युक्त down to अङ्गीकरणात्

क्षणिकत्व ज्ञानवादो शून्यवादस्तथा पर ।
द्वादशायतनानीति तृतीय बौद्धदर्शनम् ॥ ४ ॥
ईश्वरेण कृत सर्व षट् पदार्था शिवोदिता ।
चत्वार्येव प्रमाणानि नैयायिकमत त्वद ॥ ५ ॥
नास्ति जीवो न वा देवो न मोक्षो न पुनर्भव ।
न पुण्यपापे सद्भूते भूतमात्रमिद जगत् ॥ ६ ॥
अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते
प्रत्यक्षो न हि बाह्यवस्तुविसर सौत्रान्तिकैराश्रित ।
योगाचारमतानुसारिमतिना साकारबुद्धि पर
मन्यन्ते बत मध्यमाः कृतधिय स्वच्छा परा सविदम् ॥७॥
अपौरुषेय वेदस्य प्रामाण्य षट्प्रमाणता ।
सर्वज्ञाभाव इत्येतन्मीमासकमत मतम् ॥ ८ ॥
प्रत्यक्षमनुमान च शाब्द चोपमया सह ।
अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिने ॥ ९ ॥

॥ इति श्रीचन्द्रप्रभसूरिभिर्विरचित
प्रमेयरत्नकोश सपूर्ण ॥